चौखम्बा स्तोत्र ग्रन्थमाला
२०

# श्रीवेङ्कटेशसहस्रनामस्तोत्रम्

( नामावलिसंवलितम् )

चौखम्बा संस्कृत प्रतिष्ठान : दिल्ली

मूल्य १५.००

॥श्रीः॥

२०

श्रीब्रह्माण्डपुराणान्तर्गतं

# ॥ श्रीवेङ्कटेशसहस्रनामस्तोत्रम् ॥

नामावलिसंवलितम्

चौखम्बा संस्कृत प्रतिष्ठान
३८ यू ए बंगलो रोड, जवाहरनगर
दिल्ली ११०००७

मूल्य १५००

## ॥ श्रीवेङ्कटेशसहस्रनामस्तोत्रम् ॥

### पूर्वपीठिका

वसिष्ठः–

भगवन् कैश्च विधिना नामभिर्वेङ्कटेश्वरम् ।
पूजयामास तं देवं ब्रह्मा तु कमलैश्शुभैः ॥ १ ॥
पृच्छामि तानि नामानि गुणयोगपराणि किम् ।
मुख्यवृत्तीनि किं ब्रूहि लक्षकाण्यथवा हरेः ॥ २ ॥

नारद उवाच–

नामान्यनन्तानि हरेर्गुणयोगानि कानिचित् ।
मुख्यवृत्तीनि चान्यानि लक्षकाण्यपराणि च ॥ ३ ॥

परमार्थैस्सर्वशब्दैरेको ज्ञेयः परः पुमान् ।
आदिमध्यान्तरहितस्त्वव्यक्तोऽनन्तरूपभृत् ॥ ४ ॥
चन्द्रार्कवह्निवाय्वादि ग्रहर्क्षाणि नभो दिशः ।
अन्वयव्यतिरेकाभ्यां सन्ति नो सन्ति यन्मते ॥ ५ ॥
तस्य देवस्य नाम्नां हि पारं गन्तुं हि कः क्षमः ।
तथापि चाभिधानानि वेङ्कटेशस्य कानिचित् ॥ ६ ॥
ब्रह्मगीतानि पुण्यानि तानि वक्ष्यामि सुव्रत ।
यदुच्चारणमात्रेण विमुक्ताघः परं व्रजेत् ॥ ७ ॥
वेङ्कटेशस्य नाम्नां हि सहस्रस्य ऋषिर्विधिः ।
छन्दोऽनुष्टुप्तथा देवश्श्रीवत्साङ्को रमापतिः ॥ ८ ॥

बीजभूतस्तथोङ्कारो ह्रीं क्लीं शक्तिश्च कीलकम् ।
ओं नमो वेङ्कटेशायेत्यादिर्मन्त्रोऽत्र कथ्यते ॥ ९ ॥
ब्रह्माण्डगर्भः कवचमस्त्रं चक्रगदाधरः ।
विनियोगोऽभीष्टसिद्धौ हृदयं सामगायनः ॥ १० ॥

अस्य श्री वेङ्कटेशसहस्रनामस्तोत्रमहामन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप् छन्दः श्रीवत्साङ्को रमापतिर्देवता । ओं बीजं, ह्रीं शक्तिः, क्लीं कीलकम् । ब्रह्माण्डगर्भ इति कवचम्, चक्रगदाधर इत्यस्त्रम्, सामगायन इति हृदयम् । ओं नमो वेङ्कटेशायेत्यादिर्मन्त्रः । श्रीवेङ्कटेशप्रीत्यर्थे जपे विनियोगः ॥

ध्यानम्:–

भास्वच्चन्द्रमसौ यदीयनयने भार्या यदीया रमा,
यस्माद्विश्वसृडप्यभूद्यमिकुलं यद्ध्यानयुक्तं सदा ।

नाथो यो सृजतां नगेन्द्रदुहितुर्नाथोऽपि यद्भक्तिमान्,
तातो यो मदनस्य यो दुरितहा तं वेङ्कटेशं भजे ॥ ११ ॥
ऊर्ध्वौ हस्तौ यदीयौ सुररिपुदलने बिभ्रतौ शङ्खचक्रे,
सेव्यावङ्घ्री स्वकीयावभिदधदधरो दक्षिणो यस्य पाणिः ।
तावन्मात्रं भवाब्धिं गमयति भजतमूरुगो वामपाणिः,
श्रीवत्साङ्कश्च लक्ष्मीर्यदुरसि लसतस्तं भजे वेङ्कटेशम् ॥१२ ॥
इति ध्यायन् वेङ्कटेशं श्रीवत्साङ्कं रमापतिम् ।
वेङ्कटेशो विरूपाक्ष इत्यारभ्य जपेत्क्रमात् ॥ १३ ॥

---------

## ॥ श्रीवेङ्कटेशसहस्रनामस्तोत्रम् ॥

वेङ्कटेशो विरूपाक्षो विश्वशो विश्वभावनः ।
विश्वसृड्विश्वसंहर्ता विश्वप्राणो विराड्वपुः ॥ १ ॥
शेषाद्रिनिलयोऽशेषभक्तदुःखप्रणाशनः ।
शेषस्तुत्यश्शेषशायी विशेषज्ञो विभुस्स्वभूः ॥ २ ॥
विष्णुर्जिष्णुश्च वर्धिष्णुरुत्सहिष्णुस्सहिष्णुकः ।
भ्राजिष्णुश्च ग्रसिष्णुश्च वर्तिष्णुश्च भरिष्णुकः ॥ ३ ॥
कालयन्ता कालगोप्ता कालः कालान्तकोऽखिलः ।
कालगम्यः कालकण्ठवन्द्यः कालकलेश्वरः ॥ ४ ॥



शम्भुस्स्वयम्भूरम्भोजनाभिः स्तम्भितवारिधिः ।

अम्भोधिनन्दिनीजानिश्शोणाम्भोजपदप्रभः ॥ ५ ॥
कम्बुग्रीवश्शम्बरारिरूपश्शम्बरजेक्षणः ।
बिम्बाधरो बिम्बरूपी प्रतिबिम्बक्रियातिगः ॥ ६ ॥
गुणवान् गुणगम्यश्च गुणातीतो गुणप्रियः ।
दुर्गुणध्वंसकृत्सर्वसुगुणो गुणभासकः ॥ ७ ॥
परेशः परमात्मा च परंज्योतिः परागतिः ।
परंपदं वियद्वासाः पारंपर्यशुभप्रदः ॥ ८ ॥
ब्रह्माण्डगर्भो ब्रह्मण्यो ब्रह्मसृड्ब्रह्मबोधितः ।
ब्रह्मस्तुत्यो ब्रह्मवादी ब्रह्मचर्यपरायणः ॥ ९ ॥

सत्यव्रतार्थसन्तुष्टस्सत्यरूपी झषाङ्गवान् ।
सोमकप्राणहारी चानीताम्नायोऽब्धिवन्दितः ॥ १० ॥
देवासुरवरस्तुत्यः पतन्मन्दरधारकः ।
धन्वन्तरिः कच्छपाङ्गः पयोनिधिविमन्थकः ॥ ११ ॥
अमरामृतसन्दाता धृतसंमोहिनीवपुः ।
हरमोहकमायावी रक्षस्सन्दोहभञ्जनः ॥ १२ ॥
हिरण्याक्षविदारी च यज्ञो यज्ञविभावनः ।
यज्ञीयोर्वीसमुद्धर्ता लीलाक्रोडः प्रतापवान् ॥ १३ ॥
दण्डकासुरविध्वंसी वक्रदंष्ट्रः क्षमाधरः ।
गन्धर्वशापहरणः पुण्यगन्धो विचक्षणः ॥ १४ ॥

करालवक्त्रस्सोमार्कनेत्रष्षड्गुणवैभवः ।
श्वेतघोणी घूर्णितभ्रूः घुर्घुरुध्वनिविभ्रमः ॥ १५ ॥
द्राधीयान् नीलकेशी च जाग्रदम्बुजलोचनः ।
घृणावान् घृणिसंमोहो महाकालाग्निदीधितिः ॥ १६ ॥
ज्वालाकरालवदनो महोल्काकुलवीक्षणः ।
सटानिर्भिन्नमेघौघो दंष्ट्रारुग्व्याप्तदिक्तटः ॥ १७ ॥
उच्छ्वासाकृष्टभूतेशो निःश्वासत्यक्तविश्वसृट् ।
अन्तर्भ्रमज्जगद्गर्भोऽनन्तो ब्रह्मकपालहृत् ॥ १८ ॥
उग्रो वीरो महाविष्णुर्ज्वलनस्सर्वतोमुखः ।

नृसिंहो भीषणो भद्रो मृत्युमृत्युस्सनातनः ॥ १९ ॥
सभास्तम्भोद्भवो भीमश्शिरोमाली महेश्वरः ।
द्वादशादित्यचूडालः कल्पधूमसटाच्छविः ॥ २० ॥
हिरण्यकोरस्थलभिन्नखः सिंहमुखोऽनघः ।
प्रह्लादवरदो धीमान् भक्तसङ्घप्रतिष्ठितः ॥२१ ॥
ब्रह्मरुद्रादिसंसेव्यः सिद्धसाध्यप्रपूजितः ।
लक्ष्मीनृसिंहो देवेशो ज्वालाजिह्वान्त्रमालिकः ॥ २२ ॥
खड्गी खेटी महेष्वासी कपाली मुसली हली ।
पाशी शूली महाबाहुर्ज्वरघ्नो रोगलुण्टकः ॥ २३ ॥

मौञ्जीयुक्छत्रको दण्डी कृष्णाजिनधरो वटुः ।

अधीतवेदो वेदान्तोद्धारको ब्रह्मनैष्ठिकः ॥ २४ ॥
अहीनशयनप्रीतः आदितेयोऽनघो हरिः ।
संवित्प्रियस्सामवेद्यो बलिवेश्मप्रतिष्ठितः ॥ २५ ॥
बलिक्षालितपादाब्जो विन्ध्यावलिविमानितः ।
त्रिपादभूमिस्वीकर्ता विश्वरूपप्रदर्शकः ॥ २६ ॥
धृतत्रिविक्रमस्स्वांघ्रिनखभिन्नाण्डकर्परः ।
पज्जातवाहिनीधारापवित्रितजगत्त्रयः ॥ २७ ॥
विधिसम्मानितः पुण्यो दैत्ययोद्धा जयोर्जितः ।
सुरराज्यप्रदःशक्रमदहृत्सुगतीश्वरः ॥ २८ ॥

जामदग्न्यः कुठारी च कार्तवीर्यविदारणः ।
रेणुकायाश्शिरोहारी दुष्टक्षत्रियमर्दनः ॥ २९ ॥
वर्चस्वी दानशीलश्च धनुष्मान् ब्रह्मवित्तमः ।
अत्युदग्रस्समग्रश्च न्यग्रोधो दुष्टनिग्रहः ॥ ३० ॥
रविवंशसमुद्भूतो राघवो भरताग्रजः ।
कौसल्यातनयो रामो विश्वामित्रप्रियङ्करः ॥ ३१ ॥
ताटकारिस्सुबाहुघ्नो बलातिबलमन्त्रवान् ।
अहल्याशापविच्छेदी प्रविष्टजनकालयः ॥ ३२ ॥
स्वयंवरसभासंस्थ ईशचापप्रभञ्जनः ।

जानकीपरिणेता च जनकाधीशसंस्तुतः ॥ ३३ ॥

जमदग्नितनूजातयोद्धाऽयोध्याधिपाग्रणीः ।
पितृवाक्यप्रतीपालस्त्यक्तराज्यस्सलक्ष्मणः ॥ ३४ ॥
ससीतश्चित्रकूटस्थो भरताहितराज्यकः ।
काकदर्पप्रहर्ता च दण्डकारण्यवासकः ॥ ३५ ॥
पञ्चवट्यां विहारी च स्वधर्मपरिपोषकः ।
विराधहाऽगस्त्यमुख्यमुनिसम्मानितः पुमान् ॥३६ ॥
इन्द्रचापधरः खड्गधरश्चाक्षयसायकः ।
खरान्तको दूषणारिस्त्रिशिरस्करिपुर्वृषः ॥ ३७ ॥
ततश्शूर्पणखानासाच्छेत्ता वल्कलधारकः ।

जटावान् पर्णशालास्थो मारीचबलमर्दकः ॥ ३८ ॥
पक्षिराट्कृतसंवादो रवितेजा महाबलः ।
शबर्यानीतफलभुक् हनूमत्परितोषितः ॥ ३९ ॥
सुग्रीवाभयदो दैत्यकायक्षेपणभासुरः ।
सप्तसालसमुच्छेत्ता बालिहृत्कपिसंवृतः ॥४० ॥
वायुसूनुकृतासेवस्त्यक्तपम्पः कुशासनः ।
उदन्वत्तीरगश्शूरो विभीषणवरप्रदः ॥४१ ॥
सेतुकृद्दैत्यहा प्राप्तलङ्कोऽलङ्कारवान् स्वयम् ।
अतिकायशिरश्छेत्ता कुम्भकर्णविभेदनः ॥ ४२ ॥
दशकण्ठशिरोध्वंसी जाम्बवत्प्रमुखावृतः ।

जानकीशः सुराध्यक्षः साकेतेशः पुरातनः ॥ ४३ ॥
पुण्यश्लोको वेदवेद्यस्स्वामितीर्थनिवासकः ।
लक्ष्मीसरः केलिलोलो लक्ष्मीशो लोकरक्षकः ॥ ४४ ॥
देवकीगर्भसम्भूतो यशोदेक्षणलालितः ।
वसुदेवकृतस्तोत्रो नन्दगोपमनोहरः ॥ ४५ ॥
चतुर्भुजः कोमलाङ्गो गदावान्नीलकुन्तलः ।
पूतनाप्राणसंहर्ता तृणावर्तविनाशनः ॥ ४६ ॥
गर्गारोपितनामाङ्को वासुदेवो ह्यधोक्षजः ।

गोपिकास्तन्यपायी च बलभद्रानुजोऽच्युतः ॥ ४७ ॥

वैयाघ्रनखभूषश्च वत्सजिद्वत्सवर्धनः ।
क्षीरसाराशनरतो दधिभाण्डप्रमर्दनः ॥४८ ॥
नवनीतापहर्ता च नीलनीरदभासुरः ।
आभीरदृष्टदौर्जन्यो नीलपद्मनिभाननः ॥ ४९ ॥
मातृदर्शितविश्वासः उलूखलनिबन्धनः ।
नलकूबरशापान्तो गोधूलिच्छुरिताङ्गकः ॥ ५० ॥
गोसंघरक्षकः श्रीशो वृन्दादरण्यनिवासकः ।
वत्सान्तको बकद्वेषी दैत्याम्बुदमहानिलः ॥ ५१ ॥
महाजगरचण्डाग्निश्शकटप्राणकण्टकः ।
चन्द्रसेव्यः पुण्यगात्रः खरजिच्चण्डदीधितिः ॥ ५२ ॥

तालपक्वफलाशी च कालीयफणिदर्पहा ।
नागपत्नीस्तुतिप्रीतः प्रलंबासुरखण्डनः ॥ ५३ ॥
दावाग्निबलसंहारी फलाहारी गदाग्रजः ।
गोपाङ्गनाचेलचोरः पाथोलीलाविशारदः ॥ ५४ ॥
वंशगानप्रवीणश्च गोपीहस्ताम्बुजार्चितः ।
मुनिपत्न्याहृताहारो मुनिश्रेष्ठो मुनिप्रियः ॥ ५५ ॥
गोवर्धनाद्रिसन्धर्ता संक्रन्दनतमोपहः ।
सदुद्यानविलासी च रासक्रीडापरायणः ॥ ५६ ॥

वरुणाभ्यर्चितो गोपीप्रार्थितः पुरुषोत्तमः ।

अक्रूरस्तुतिसंप्रीतः कुब्जायौवनदायकः ॥ ५७ ॥
मुष्टिकोरःप्रहारी च चाणूरोदरदारणः ।
मल्लयुद्धाग्रगण्यश्च पितृबन्धनमोचकः ॥ ५८ ॥
मत्तमातङ्गपञ्चास्यः कंसग्रीवानिकृन्तनः ।
उग्रसेनप्रतिष्ठाता रत्नसिंहासनस्थितः ॥ ५९ ॥
कालनेमिखलद्वेषी मुचुकन्दवरप्रदः ।
साल्वसेवितदुर्धर्षराजस्मयनिवारणः ॥ ६० ॥
रुक्मिगर्वापहारी च रुक्मिणीनयनोत्सवः ।
प्रद्युम्नजनकः कामी प्रद्युम्नो द्वारकाधिपः ॥ ६१ ॥
मण्याहर्ता महामायो जाम्बवत्कृतसङ्गरः ।

जाम्बूनदाम्बरधरो गम्यो जाम्बवतीविभुः ॥ ६२ ॥
कालिन्दीप्रथितारामकेलिर्गुञ्जावतंसकः ।
मन्दारसुमनोभास्वान् शचीशाभीष्टदायकः ॥ ६३ ॥
सत्राजिन्मानसोल्लासी सत्याजानिश्शुभावहः ।
शतधन्वहरस्सिद्धः पाण्डवप्रियकोत्सवः ॥ ६४ ॥
भद्राप्रियस्सुभद्रायाः भ्राता नाग्नजितीविभुः ।
किरीटकुण्डलधरः कल्पपल्लवलालितः ॥ ६५ ॥
भैष्मीप्रणयभाषावान् मित्रविन्दाधिपोऽभयः ।

स्वमूर्तिकेलिसम्प्रीतो लक्ष्मणोदारमानसः ॥ ६६ ॥

प्राग्ज्योतिषाधिपध्वंसी तत्सैन्यान्तकरोऽमृतः ।
भूमिस्तुतो भूरिभोगो भूषणांबरसंयुतः ॥ ६७ ॥
बहुरामाकृताह्लादो गन्धमाल्यानुलेपनः ।
नारदादृष्टचरितो देवेशो विश्वराड्गुरुः ॥ ६८ ॥
बाणबाहुविदारश्च तापज्वरविनाशनः ।
उपोद्धर्षयिताऽव्यक्तशिशववाक्तुष्टमानसः ॥ ६९ ॥
महेशज्वरसंस्तुत्यः शीतज्वरभयान्तकः ।
नृगराजोद्धारकश्च पौण्ड्रकादिवधोद्यतः ॥ ७० ॥
विविधारिच्छलोद्विग्नब्राह्मणेषु दयापरः ।
जरासन्धबलद्वेषी केशिदैत्यभयङ्करः ॥ ७१ ॥

चक्री चैद्यान्तकस्सभ्यो राजबन्धविमोचकः ।
राजसूयहविर्भोक्ता स्निग्धाङ्गश्शुभलक्षणः ॥ ७२ ॥
धानाभक्षणसंप्रीतः कुचेलाभीष्टदायकः ।
सत्वादिगुणगम्भीरो द्रौपदीमानरक्षकः ॥ ७३ ॥
भीष्मध्येयो भक्तवश्यो भीमपूज्यो दयानिधिः ।
दन्तवक्त्रशिरश्छेत्ता कृष्णः कृष्णासखस्स्वराट् ॥ ७४ ॥
वैजयन्तीप्रमोदी च बर्हिबर्हविभूषणः ।
पार्थकौरवसन्धानकारी दुश्शासनान्तकः ॥ ७५ ॥

बुद्धो विशुद्धस्सर्वज्ञः क्रतुहिंसाविनिन्दकः ।

त्रिपुरस्त्रीमानभङ्गस्सर्वशास्त्रविशारदः ॥ ७६ ॥
निर्विकारो निर्ममश्च निराभासो निरामयः ।
जगन्मोहकधर्मी च दिग्वस्त्रो दिक्पतीश्वरः ॥ ७७ ॥
कल्की म्लेच्छप्रहर्ता च दुष्टनिग्रहकारकः ।
धर्मप्रतिष्ठाकारी च चातुर्वर्ण्यविभागकृत् ॥ ७८ ॥
युगान्तको युगाक्रान्तो युगकृद्युगभासकः ।
कामारिः कामकारी च निष्कामः कामितार्थदः ॥ ७९ ॥
भर्गो वरेण्यं सवितुश्शार्ङ्गी वैकुण्ठमन्दिरः ।
हयग्रीवः कैटभारिर्ग्राहघ्नो गजरक्षकः ॥ ८० ॥
सर्वसंशयविच्छेत्ता सर्वभक्तसमुत्सुकः ।

कपर्दी कामहारी च कला काष्ठा स्मृतिर्धृतिः ॥ ८१ ॥
अनादिरप्रमेयौजाः प्रधानस्सन्निरूपकः ।
निर्लेपो निस्स्पृहोऽसङ्गो निर्भयो नीतिपारगः ॥ ८२ ॥
निष्प्रेष्यो निष्क्रियश्शान्तो निष्प्रपञ्चो निधिर्नयः ।
कर्म्यकर्मी विकर्मी च कर्मेप्सुः कर्मभावनः ॥ ८३ ॥
कर्माङ्गः कर्मविन्यासो महाकर्मी महाव्रती ।
कर्मभुक्कर्मफलदः कर्मेशः कर्मनिग्रहः ॥ ८४ ॥
नरो नारायणो दान्तः कपिलः कामदश्शुचिः ।
तप्ता जप्ताऽक्षमालावान् गन्ता नेता लयो गतिः ॥८५ ॥

शिष्टो द्रष्टा रिपुद्वेष्टा रोष्टा वेष्टा महानटः ।
रोद्धा बोद्धा महायोद्धा श्रद्धावान् सत्यधीश्शुभः ॥ ८६ ॥
मन्त्री मन्त्रो मन्त्रगम्यो मन्त्रकृत्परमन्त्रहृत् ।
मन्त्रभृन्मन्त्रफलदो मन्त्रेशो मन्त्रविग्रहः ॥ ८७ ॥
मन्त्राङ्गो मन्त्रविन्यासो महामन्त्रो महाक्रमः ।
स्थिरधीस्स्थिरविज्ञानः स्थिरप्रज्ञस्स्थिरासनः ॥ ८८ ॥
स्थिरयोगः स्थिराधारः स्थिरमार्गः स्थिरागमः ।
निश्श्रेयसो निरीहोऽग्निर्निरवद्यो निरञ्जनः ॥ ८९ ॥
निर्वैरो निरहङ्कारो निर्दम्भो निरसूयकः ।
अनन्तोऽनन्तबाहूरुरनन्तांघ्रिरनन्तदृक् ॥ ९० ॥

अनन्तवक्त्रोऽनन्ताङ्गोऽनन्तरूपो ह्यनन्तकृत् ।
ऊर्ध्वरेता ऊर्ध्वलिङ्गो ह्यूर्ध्वमूर्धोर्ध्वशाखकः ॥ ९१ ॥
ऊर्ध्व ऊर्ध्वाध्वरक्षी च ह्यूर्ध्वज्वालो निराकुलः ।
बीजं बीजप्रदो नित्यो निदानं निष्कृतिः कृती ॥ ९२ ॥
महानणीयान् गरिमा सुषमा चित्रमालिकः ।
नभस्स्पृङ्नभसो ज्योतिर्नभस्वान् निर्नभा नभः ॥ ९३ ॥
अभुर्विभुः प्रभुश्शम्भुर्महीयान् भूर्भुवाकृतिः ।
महानन्दो महाशूरो महोराशिर्महोत्सवः ॥ ९४ ॥

महाक्रोधो महाज्वालो महाशान्तो महागुणः ।

सत्यव्रतस्सत्यपरस्सत्यसन्धस्सताङ्गतिः ॥९५ ॥
सत्येशस्सत्यसङ्कल्पस्सत्यचारित्रलक्षणः ।
अन्तश्चरो ह्यन्तरात्मा परमात्मा चिदात्मकः ॥ ९६ ॥
रोचनो रोचमानश्च साक्षी शौरिर्जनार्दनः ।
मुकुन्दो नन्दनिष्पन्दस्स्वर्णबिन्दुः पुरन्दरः ॥ ९७ ॥
अरिन्दमस्सुमन्दश्च कुन्दमन्दारहासवान् ।
स्यन्दनारूढचण्डाङ्गो ह्यानन्दी नन्दनन्दनः ॥ ९८ ॥
अनसूयानन्दनोऽत्रिनेत्रानन्दस्सुनन्दवान् ।
शङ्खवान् पङ्कजकरः कुंकुमांको जयांकुशः ॥ ९९ ॥

अम्भोजमकरन्दाढ्यो निष्पङ्कोऽगरुपङ्किलः ।

इन्द्रश्चन्द्ररथश्चन्द्रोऽतिचन्द्रश्चन्द्रभासकः ॥ १०० ॥
उपेन्द्र इन्द्रराजश्च वागिन्द्रश्चन्द्रलोचनः ।
प्रत्यक्पराक् परंधाम परमार्थः परात्परः ॥ १०१ ॥
अपारवाक्पारगामी पारावारः परावरः ।
सहस्वानर्थदाता च सहनस्साहसी जयी ॥ १०२ ॥
तेजस्वी वायुविशिखी तपस्वी तापसोत्तमः ।
ऐश्वर्योद्भूतिकृद्भूतिरैश्वर्याङ्गकलापवान् ॥ १०३ ॥
अम्भोधिशायी भगवान् सर्वज्ञस्सामपारगः ।
महायोगी महाधीरो महाभोगी महाप्रभुः ॥ १०४ ॥

महावीरो महातुष्टिर्महापुष्टिर्महागुणः ।
महादेवो महाबाहुर्महाधर्मो महेश्वरः ॥ १०५ ॥
समीपगो दूरगामी स्वर्गमार्गनिरर्गलः ।
नगो नगधरो नागो नागेशो नागपालकः ॥ १०६ ॥
हिरणमयस्स्वर्णरेता हिरण्यार्चिर्हिरण्यदः ।
गुणगण्यश्शरण्यश्च पुण्यकीर्तिः पुरागमः ॥१०७ ॥
जन्यभृज्जन्यसन्नद्धो दिव्यपञ्चायुधो वशी ।
दौर्जन्यभङ्गः पर्जन्यस्सौजन्यनिलयोऽलयः ॥ १०८ ॥
जलन्धरान्तको भस्मदैत्यनाशी महामनाः ।
श्रेष्ठः श्रविष्ठो द्राघिष्ठो गरिष्ठो गरुडध्वजः ॥१०९ ॥

ज्येष्ठो द्रढिष्ठो वर्षिष्ठो द्राघीयान् प्रणवः फणी ।
संप्रदायकरस्स्वामी सुरेशो माधवो मधुः ॥ ११० ॥
निर्निमेषो विधिर्वेधा बलवान् जीवनं बली ।
स्मर्ता श्रोता विकर्ता च ध्याता नेता समोऽसमः ॥ १११ ॥
होता पोता महावक्ता रन्ता मन्ता खलान्तकः ।
दाता ग्राहयिता माता नियन्तानन्तवैभवः ॥ ११२ ॥
गोप्ता गोपयिता हन्ता धर्मजागरिता धवः ।
कर्ता क्षेत्रकरः क्षेत्रप्रदः क्षेत्रज्ञ आत्मवित् ॥ ११३ ॥
क्षेत्री क्षेत्रहरः क्षेत्रप्रियः क्षेमकरो मरुत् ।

भक्तिप्रदो मुक्तिदायी शक्तिदो युक्तिदायकः ॥ ११४ ॥
शक्तियुङ्मौक्तिकस्रग्वी सूक्तिराम्नायसूक्तिगः ।
धनञ्जयो धनाध्यक्षो धनिको धनदाधिपः ॥ ११५ ॥
महाधनो महामानी दुर्योधनविमानितः ॥
रत्नाकरो रत्नरोची रत्नगर्भाश्रयश्शुचिः ॥ ११६ ॥
रत्नसानुनिधिर्मौलिरत्नभा रत्नकङ्कणः ।
अन्तर्लक्ष्योऽन्तरभ्यासी चान्तर्ध्येयो जितासनः ॥ ११७ ॥
अन्तरङ्गो दयावांश्च ह्यन्तर्मायो महार्णवः ।
सरसस्सिद्धरसिकः सिद्धिस्साध्यस्सदागतिः ॥ ११८ ॥
आयुःप्रदो महायुष्मानर्चिष्मानोषधीपतिः ।

अष्टश्रीरष्टभागोष्टककुब्व्याप्तयशा व्रती ॥ ११९ ॥
अष्टापदस्सुवर्णाभो ह्यष्टमूर्तिस्त्रिमूर्तिमान् ।
अस्वप्नस्स्वप्नगस्स्वप्नस्सुस्वप्नफलदायकः ॥ १२० ॥
दुस्स्वप्नध्वंसको ध्वस्तदुर्निमित्तश्शिवङ्करः ।
सुर्वणवणस्संभाव्यो वर्णितो वर्णसम्मुखः ॥ १२१ ॥
सुवर्णमुखरीतीरशिवध्यातपदाम्बुजः ।
दाक्षायणीवचस्तुष्टो दुर्वासोदृष्टिगोचरः ॥ १२२ ॥
अम्बरीषव्रतप्रीतो महाकृत्तिविभञ्जनः ।
महाभिचारकध्वंसी कालसर्पभयान्तकः ॥ १२३ ॥

सुदर्शनः कालमेघश्यामश्श्रीमन्त्रभावितः ।
हेमाम्बुजसरस्नायी श्रीमनोभाविताकृतिः ॥ १२४ ॥
श्रीप्रदत्ताम्बुजस्रग्वी श्रीकेलिश्श्रीनिधिर्भवः ।
श्रीप्रदो वामनो लक्ष्मीनायकश्च चतुर्भुजः ॥१२५ ॥
सन्तृप्तस्तर्पितस्तीर्थस्नातृसौख्यप्रदर्शकः ।
अगस्त्यस्तुतिसंहृष्टो दर्शिताव्यक्तभावनः ॥ १२६ ॥
कपिलार्चिः कपिलवान् सुस्नाताघविपाटनः ।
वृषाकपिः कपिस्वामिमनोन्तस्स्थितविग्रहः ॥ १२७ ॥
वह्निप्रियोऽर्थसम्भाव्यो जनलोकविधायकः ।
वह्निप्रभो वह्नितेजाः शुभाभीष्टप्रदो यमी ॥ १२८ ॥

वारुणक्षेत्रनिलयो वरुणो वारणार्चितः ।
वायुस्थानकृतावासो वायुगो वायुसंभृतः ॥ १२९ ॥
यमान्तकोऽभिजननो यमलोकनिवारणः ।
यमिनामग्रगण्यश्च संयमी यमभावितः ॥ १३० ॥
इन्द्रोद्यानसमीपस्थ इन्द्रदृग्विषयः प्रभुः ।
यक्षराट्सरसीवासो ह्यक्षय्यनिधिकोशकृत् ॥ १३१ ॥
स्वामितीर्थकृतावासः स्वामिध्येयो ह्यधोक्षजः ।

वराहाद्यष्टतीर्थाभिसेविताङ्घ्रिसरोरुहः ॥ १३२ ॥
पाण्डुतीर्थाभिषिक्ताङ्गो युधिष्ठिरवरप्रदः ।

भीमान्तःकरणारूढः श्वेतवाहनसख्यवान् ॥ १३३ ॥
नकुलाभयदो माद्रीसहदेवाभिवन्दितः ।
कृष्णाशपथसन्धाता कुन्तीस्तुतिरतो दमी ॥ १३४ ॥
नारदादिमुनिस्तुत्यो नित्यकर्मपरायणः ।
दर्शिताव्यक्तरूपश्च वीणानादप्रमोदितः ॥१३५ ॥
षट्कोटितीर्थचर्यावान् देवतीर्थकृताश्रमः ।
बिल्वामलजलस्नायी सरस्वत्यम्बुसेवितः ॥ १३६ ॥
तुम्बुरूदकसंस्पर्शजनचित्ततमोपहः ।
मत्स्यवामनकूर्मादितीर्थराजः पुराणभृत् ॥ १३७ ॥
शक्रध्येयपदाम्भोजः शङ्खपूजितपादुकः ।

रामतीर्थविहारी च बलभद्रप्रतिष्ठितः ॥ १३८ ॥
जामदग्न्यसरस्तीर्थजलसेचनतर्पितः ।
पापापहारिकीलालसुस्नाताघविनाशनः ॥ १३९ ॥
नभोगङ्गाभिषिक्तश्च नागतीर्थाभिषेकवान् ।
कुमारधारातीर्थस्थो वटुवेषस्सुमेखलः ॥१४० ॥
वृद्धस्य सुकुमारत्वप्रदस्सौन्दर्यवान् सुखी ।
प्रियंवदो महाकुक्षिरिक्ष्वाकुकुलनन्दनः ॥ १४१ ॥
नीलगोक्षीरधाराभूर्वराहाचलनायकः ।

भरद्वाजप्रतिष्ठावान् बृहस्पतिविभावितः ॥ १४२ ॥

अञ्जनाकृतपूजावान् आञ्जनेयकरार्चितः ।
अञ्जनाद्रिनिवासश्च मुञ्जिकेशः पुरन्दरः ॥ १४३ ॥
किन्नरद्वन्द्वसंबन्धो बन्धमोक्षप्रदायकः ।
वैखानसमखारम्भो वृषज्ञेयो वृषाचलः ॥ १४४ ॥
वृषकायप्रभेत्ता च क्रीडनाचारसंभ्रमः ।
सौवर्चलेयविन्यस्तराज्यो नारायणप्रियः ॥ १४५ ॥
दुर्मेधोभञ्जकः प्राज्ञो ब्रह्मोत्सवमहोत्सुकः ।
भद्रासुरशिरश्छेत्ता भद्रक्षेत्री सुभद्रवान् ॥ १४६ ॥
मृगयाक्षीणसन्नाहश्शङ्खराजन्यतुष्टिदः ।
स्थाणुस्थो वैनतेयाङ्गभावितो ह्यशरीरवान् ॥ १४७ ॥

भोगीन्द्रभोगसंस्थानो ब्रह्मादिगणसेवितः ।
सहस्रार्कच्छटाभास्वद्विमानान्तस्स्थितो गुणी ॥१४८ ॥
विष्वक्सेनकृतस्तोत्रस्सनन्दनपरीवृतः ।
जाह्नव्यादिनदीसेव्यः सुरेशाद्यभिवन्दितः ॥ १४९ ॥
सुराङ्गनानृत्यपरो गन्धर्वोद्गायनप्रियः ।
राकेन्दुसंकाशनखः कोमलांघ्रिसरोरुहः ॥ १५० ॥
कच्छपप्रपदः कुन्दगुल्फकस्स्वच्छकूर्परः ।
मेदुरस्वर्णवस्त्राढ्यकटिदेशस्थमेखलः ॥ १५१ ॥
प्रोल्लसच्छुरिकाभास्वत्कटिदेशश्शुभङ्करः ।

अनन्तपद्मजस्थाननाभिर्मौक्तिकमालिकः ॥ १५२ ॥
मन्दारचाम्पेयमाली रत्नाभरणसंभृतः ।
लम्बयज्ञोपवीती च चन्द्रश्रीखण्डलेपवान् ॥ १५३ ॥
वरदोऽभयदश्चक्री शङ्खी कौस्तुभदीप्तिमान् ।
श्रीवत्साङ्कितवक्षस्को लक्ष्मीसंश्रितहृत्तटः ॥ १५४ ॥
नीलोत्पलनिभाकारः शोणाम्भोजसमाननः !
कोटिमन्मथलावण्यश्चन्द्रिकास्मितपूरितः ॥ १५५ ॥
सुधास्वच्छोर्ध्वपुण्ड्रश्च कस्तूरीतिलकाञ्चितः ।
पुण्डरीकेक्षणः स्वच्छो मौलिशोभाविराजितः ॥ १५६ ॥
पद्मस्थः पद्मनाभश्च सोममण्डलगो बुधः ।

वह्निमण्डलगस्सूर्यस्सूर्यमण्डलसंस्थितः ॥ १५७ ॥
श्रीपतिर्भूमिजानिश्च विमलाद्यभिसंवृतः ।
जगत्कुटुम्बजनिता रक्षकः कामितप्रदः ॥ १५८ ॥
अवस्थात्रययन्ता च विश्वतेजस्स्वरूपवान् ।
ज्ञप्तिर्ज्ञेयो ज्ञानगम्यो ज्ञानातीतस्सुरातिगः ॥ १५९ ॥
ब्रह्माण्डान्तर्बहिर्व्याप्तो वेङ्कटाद्रिगदाधरः ॥१६० ॥

॥श्रीवेङ्कटेशसहस्रनामस्तोत्रं सम्पूर्णम् ॥

एवं श्रीवेङ्कटेशस्य कीर्तितं परमाद्भुतम् ।
नाम्नां सहस्त्रं संश्राव्यं पवित्रं पुण्यवर्धनम् ॥ १ ॥
श्रवणात्सर्वदोषघ्नं रोगघ्नं मृत्युनाशनम् ॥
दारिद्यभेदनं धर्म्यं सर्वैश्वर्यफलप्रदम् ॥ २ ॥
कालाहिविषविच्छेदि ज्वरापस्मारभञ्जनम् ।
शत्रुक्षयकरं राजग्रहपीडानिवारणम् ॥ ३ ॥
ब्रह्मराक्षसकूष्माण्डवेतालभयभञ्जनम् ।
विद्याभिलाषी विद्यावान् धनार्थी धनवान् भवेत् ॥ ४ ॥
अनन्तकल्पजीवी स्यादायुष्कामो महायशाः ।
पुत्रार्थी सुगुणान् पुत्रान् लभेतायुष्यमांस्ततः ॥ ५ ॥

संग्रामे शत्रुविजयी सभायां प्रतिवादिजित् ।
दिव्यैर्नामभिरेभिस्तु तुलसीपूजनात्सकृत् ॥६ ॥
वैकुण्ठवासिभगवत्सदृशो विष्णुसन्निधौ ।
कल्हारपूजनान्मासादद्द्वितीय इव यक्षराट् ॥ ७ ॥
नीलोत्पलार्चनात्सर्वराजपूज्यस्सदा भवेत् ।
हृत्संस्थितैर्नामभिस्तु भूयादद्दृग्विषयो हरिः ॥८ ॥
वांछितार्थं तदा दत्वा वैकुण्ठं च प्रयच्छति ।
त्रिसन्ध्यं यो जपेन्नित्यं संपूज्य विधिना विभुम् ॥९ ॥
त्रिवारं पञ्चवारं वा प्रत्यहं क्रमशो यमी ।

मासादलक्ष्मीनाशस्स्यात् द्विमासात्स्यान्नरेन्द्रता ॥ १० ॥
त्रिमासान्महदैश्वर्यं ततस्संभाषणं भवेत् ।
मासं पठन् न्यूनकर्मपूर्तिं च समवाप्नुयात् ॥ ११ ॥
मार्गभ्रष्टश्च सन्मार्गं गतस्वस्स्वं स्वकीयकम् ।
चाञ्चल्यचित्तोऽचाञ्चल्यं मनस्स्वास्थ्यं च गच्छति ॥ १२ ॥
आयुरारोग्यमैश्वर्यं ज्ञानं मोक्षं च विन्दति ।
सर्वान् कामानवाप्नोति शाश्वतञ्च पदं तथा ॥ १३ ॥
सत्यं सत्यं पुनस्सत्यं सत्यं सत्यं न संशयः ॥ १४ ॥

इतिब्रह्माण्डपुराणे, वसिष्ठनारदसंवादे, वेङ्कटाचलमाहात्म्ये फलश्रुतिसहित
श्रीवेङ्कटेशसहस्रनामस्तोत्रं सम्पूर्णम्

## ॥ श्रीवेङ्कटेशसहस्रनामावलिः ॥

ॐ वेङ्कटेशाय नमः ।
ॐ विरूपाक्षाय नमः ।
ॐ विश्वेशाय नमः ।
ॐ विश्वभावनाय नमः ।
ॐ विश्वसृजे नमः ।
ॐ विश्वसंहर्त्रे नमः ।
ॐ विश्वप्राणाय नमः ।
ॐ विराड्वपुषे नमः ।
ॐ शेषाद्रिनिलयाय नमः ।
ॐ अशेषभक्तदुःख-
प्रणाशनाय नमः । १०
ॐ शेषस्तुत्याय नमः ।
ॐ शेषशायिने नमः ।
ॐ विशेषज्ञाय नमः ।
ॐ विभवे नमः ।
ॐ स्वभुवे नमः ।
ॐ विष्णवे नमः ।
ॐ जिष्णवे नमः ।

ॐ वर्धिष्णवे नमः ।
ॐ उत्सहिष्णवे नमः ।
ॐ सहिष्णुकाय नमः । २०
ॐ भ्राजिष्णवे नमः ।
ॐ ग्रसिष्णवे नमः ।
ॐ वर्तिष्णवे नमः ।
ॐ भरिष्णुकाय नमः ।
ॐ कालयन्त्रे नमः ।
ॐ कालगोप्त्रे नमः ।
ॐ कालाय नमः ।

ॐ कालान्तकाय नमः ।
ॐ अखिलाय नमः ।
ॐ कालगम्याय नमः । ३०
ॐ कालकण्ठवन्द्याय नमः ।
ॐ कालकलेश्वराय नमः ।
ॐ शम्भवे नमः ।
ॐ स्वयम्भुवे नमः ।
ॐ अम्भोजनाभये नमः ।
ॐ स्तम्भितवारिधये नमः ।
ॐ अम्भोधिनन्दिनीजानये नमः ।

ॐ शोणाम्भोजपदप्रभाय नमः ।
ॐ कम्बुग्रीवाय नमः ।
ॐ शम्बरारिरूपाय नमः । ४०
ॐ शम्बरजेक्षणाय नमः ।
ॐ बिम्बाधराय नमः ।
ॐ बिम्बरूपिणे नमः ।
ॐ प्रतिबिम्बक्रियातिगाय नमः ।
ॐ गुणवते नमः ।
ॐ गुणगम्याय नमः ।
ॐ गुणातीताय नमः ।
ॐ गुणप्रियाय नमः ।
ॐ दुर्गुणध्वंसकृते नमः ।
ॐ सर्वसुगुणाय नमः । ५०
ॐ गुणभासकाय नमः ।
ॐ परेशाय नमः ।
ॐ परमात्मने नमः ।
ॐ परंज्योतिषे नमः ।
ॐ परायै गतये नमः ।

ॐ परस्मैपदाय नमः ।
ॐ वियद्वाससे नमः ।
ॐ पारंपर्यशुभप्रदाय नमः ।
ॐ ब्रह्माण्डगर्भाय नमः ।
ॐ ब्रह्मण्याय नमः । ६०
ॐ ब्रह्मसृजे नमः ।
ॐ ब्रह्मबोधिताय नमः ।
ॐ ब्रह्मस्तुत्याय नमः ।
ॐ ब्रह्मवादिने नमः ।
ॐ ब्रह्मचर्यपरायणाय नमः ।

ॐ सत्यव्रतार्थसन्तुष्टाय नमः ।
ॐ सत्यरूपिणे नमः ।
ॐ झषाङ्गवते नमः ।
ॐ सोमकप्राणहारिणे नमः ।
ॐ आनीताम्नायाय नमः । ७०
ॐ अब्धिवन्दिताय नमः ।
ॐ देवासुरस्तुत्याय नमः ।
ॐ पतन्मन्दरधारकाय नमः ।
ॐ धन्वन्तरये नमः ।
ॐ कच्छपाङ्गाय नमः ।

ॐ पयोनिधिविमन्थकाय नमः ।
ॐ अमरामृतसन्दात्रे नमः ।
ॐ धृतसंमोहिनीवपुषे नमः ।
ॐ हरमोहकमायाविने नमः ।
ॐ रक्षस्सन्दोहभञ्जनाय नमः ।८०
ॐ हिरण्याक्षविदारिणे नमः ।
ॐ यज्ञाय नमः ।
ॐ यज्ञविभावनाय नमः ।
ॐ यज्ञीयोर्वीसमुद्धर्त्रे नमः ।
ॐ लीलाक्रोडाय नमः ।
ॐ प्रतापवते नमः ।
ॐ दण्डकासुरविध्वंसिने नमः ।
ॐ वक्रदंष्ट्राय नमः ।
ॐ क्षमाधराय नमः ।
ॐ गन्धर्वशापहरणाय नमः ।९०
ॐ पुण्यगन्धाय नमः ।
ॐ विचक्षणाय नमः ।
ॐ करालवक्त्राय नमः ।

ॐ सोमार्कनेत्राय नमः ।

ॐ षड्गुणवैभवाय नमः ।

ॐ श्वेतघोणिने नमः ।

ॐ घूर्णितभ्रुवे नमः ।

ॐघुर्घुरुध्वनिविभ्रमाय नमः ।

ॐ द्राघीयसे नमः ।

ॐ नीलकेशिने नमः । १००

ॐ जाग्रदम्बुजलोचनाय नमः ।

ॐ घृणावते.नमः ।

ॐ घृणिसंमोहाय नमः ।

ॐ महाकालाग्निदीधितये नमः ।

ॐ ज्वालाकरालवदनाय नमः ।

ॐ महोल्काकुलवीक्षणाय नमः ।

ॐ सटानिर्भिन्नमेघौघाय नमः ।

ॐ दंष्ट्रारुग्व्याप्तदिक्तटाय नमः ।

ॐ उच्छ्वासाकृष्टभूतेशाय नमः ।

ॐ निःश्वासत्यक्तविश्वसृजे नमः ।

ॐ अन्तर्भ्रमज्जगद्गर्भाय नमः ।

ॐ अनन्ताय नमः ।

ॐ ब्रह्मकपालहृते नमः ।

ॐ उग्राय नमः ।
ॐ वीराय नमः
ॐ महाविष्णवे नमः ।
ॐ ज्वलनाय नमः ।
ॐ सर्वतोमुखाय नमः ।
ॐ नृसिंहाय नमः ।
ॐ भीषणाय नमः । १२०
ॐ भद्राय नमः ।
ॐ मृत्युमृत्यवे नमः ।
ॐ सनातनाय नमः ।
ॐ सभास्तम्भोद्भवाय नमः ।
ॐ भीमाय नमः ।
ॐ शिरोमालिने नमः ।
ॐ महेश्वराय नमः ।
ॐ द्वादशादित्यचूडालाय नमः ।
ॐ कल्पधूमसटाच्छवये नमः ।
ॐ हिरण्यकोरस्थलभिन्नखाय नमः ।१
ॐ सिंहमुखाय नमः ।

ॐ अनघाय नमः ।
ॐ प्रह्लादवरदाय नमः ।
ॐ धीमते नमः ।
ॐ भक्तसङ्घप्रतिष्ठिताय नमः ।
ॐ ब्रह्मरुद्रादिसंसेव्याय नमः ।
ॐ सिद्धसाध्यप्रपूजिताय नमः ।
ॐ लक्ष्मीनृसिंहाय नमः ।
ॐ देवेशाय नमः ।
ॐ ज्वालाजिह्वान्त्रमालिकाय नमः ।
ॐ खड्गिने नमः ।
ॐ खेटिने नमः ।
ॐ महेष्वासिने नमः ।
ॐ कपालिने नमः ।
ॐ मुसलिने नमः ।
ॐ हलिने नमः ।
ॐ पाशिने नमः ।
ॐ शूलिने नमः ।
ॐ महाबाहवे नमः ।
ॐ ज्वरघ्नाय नमः । १५०
ॐ रोगलुण्टकाय नमः ।

ॐ मौञ्जीयुजे नमः ।
ॐ छत्रकाय नमः ।
ॐ दण्डिने नमः ।
ॐ कृष्णाजिनधराय नमः ।
ॐ वटवे नमः ।
ॐ अधीतवेदाय नमः ।
ॐ वेदान्तोद्धारकाय नमः ।
ॐ ब्रह्मनैष्ठिकाय नमः ।
ॐ अहीनशयनप्रीताय नमः । १६०
ॐ आदितेयाय नमः ।
ॐ अनघाय नमः ।
ॐ हरये नमः ।
ॐ संवित्प्रियाय नमः ।
ॐ सामवेद्याय नमः ।
ॐ बलिवेश्मप्रतिष्ठिताय नमः ।
ॐ बलिक्षालितपादाब्जाय नमः ।
ॐ विन्ध्यावलिविमानिताय नमः ।
ॐ त्रिपादभूमिस्वीकर्त्रे नमः ।

ॐ विश्वरूपप्रदर्शकाय नमः । १७०
ॐ धृतत्रिविक्रिमाय नमः ।
ॐ स्वांघ्रिनखभिन्नाण्डकर्पराय नमः ।
ॐ पज्जातवाहिनीधारा–
पवित्रितजगत्त्रयाय नमः ।
ॐ विधिसम्मानिताय नमः ।
ॐ पुण्याय नमः ।
ॐ दैत्ययोद्ध्रे नमः ।
ॐ जयोर्जिताय नमः ।
ॐ सुरराज्यप्रदाय नमः ।
ॐ शुक्रमदहृते नमः ।
ॐ सुगतीश्वराय नमः । १८०
ॐ जामदग्न्याय नमः ।
ॐ कुठारिणे नमः ।
ॐ कार्तवीर्यविदारणाय नमः ।
ॐ रेणुकायाश्शिरोहारिणे नमः ।
ॐ दुष्टक्षत्रियमर्दनाय नमः ।
ॐ वर्चस्विने नमः ।
ॐ दानशीलाय नमः ।
ॐ धनुष्मते नमः ।

ॐ ब्रह्मवित्तमाय नमः ।
ॐ अत्युदग्राय नमः ।१९०
ॐ समग्राय नमः ।
ॐ न्यग्रोधाय नमः ।
ॐ दुष्टनिग्रहाय नमः ।
ॐ रविवंशसमुद्भूताय नमः ।
ॐ राघवाय नमः ।
ॐ भरताग्रजाय नमः ।
ॐ कौसल्यातनयाय नमः ।
ॐ रामाय नमः ।
ॐ विश्वामित्रिप्रियङ्कराय नमः ।
ॐ ताटकारये नमः । २००
ॐ सुबाहुघ्नाय नमः ।
ॐ बलातिबलमन्त्रवते नमः ।
ॐ अहल्याशापविच्छेदिने नमः ।
ॐ प्रविष्टजनकालयाय नमः ।
ॐ स्वयंवरसभासंस्थाय नमः ।
ॐ ईशचापप्रभञ्जनाय नमः ।

ॐ जानकीपरिणेत्रे नमः ।
ॐ जनकाधीशसंस्तुताय नमः ।
ॐ जमदग्नितनूजातयोदध्रे नमः ।
ॐ अयोध्याधिपाग्रण्ये नमः ।
ॐ पितृवाक्यप्रतीपालाय नमः ।
ॐ त्यक्तराज्याय नमः ।
ॐ सलक्ष्मणाय नमः ।
ॐ ससीताय नमः ।
ॐ चित्रकूटस्थाय नमः ।
ॐ भरताहितराज्यकाय नमः ।
ॐ काकदर्पप्रहर्त्रे नमः ।
ॐ दण्डकारण्यवासकाय नमः ।
ॐ पञ्चवट्यां विहारिणे नमः ।
ॐ स्वधर्मपरिपोषकाय नमः ।२२०
ॐ विराधघ्ने नमः ।
ॐ अगस्त्यमुख्यमुनि-
सम्मानिताय नमः ।
ॐ पुंसे नमः ।
ॐ इन्द्रचापधराय नमः ।
ॐ खड्गधराय नमः ।

ॐ अक्षयसायकाय नमः ।
ॐ खरान्तकाय नमः ।
ॐ दूषणारये नमः ।
ॐ त्रिशिरस्करिपवे नमः ।
ॐ वृषाय नमः । २३०
ॐ शूर्पणखानासाच्छेत्त्रे नमः ।
ॐ वल्कलधारकाय नमः ।
ॐ जटावते नमः ।
ॐ पर्णशालास्थाय नमः ।
ॐ मारीचबलमर्दकाय नमः ।
ॐ पक्षिराट्कृतसंवादाय नमः ।
ॐ रवितेजसे नमः ।
ॐ महाबलाय नमः ।
ॐ शबर्यानीतफलभुजे नमः ।
ॐ हनूमत्परितोषिताय नमः ।२४०
ॐ सुग्रीवाभयदाय नमः ।
ॐ दैत्यकायक्षेपणभासुराय नमः ।
ॐ सप्तसालसमुच्छेत्रे नमः ।

ॐ वालिहृते नमः ।
ॐ कपिसंवृताय नमः ।
ॐ वायुसूनुकृतासेवाय नमः ।
ॐ त्यक्तपम्पाय नमः ।
ॐ कुशासनाय नमः ।
ॐ उदन्वत्तीरगाय नमः ।
ॐ शूराय नमः । २५०
ॐ विभीषणवरप्रदाय नमः ।
ॐ सेतुकृते नमः ।
ॐ दैत्यघ्ने नमः ।

ॐ प्राप्तलङ्काय नमः ।
ॐ अलङ्कारवते नमः ।
ॐ अतिकायशिरश्छेत्त्रे नमः ।
ॐ कुम्भकर्णविभेदनाय नमः ।
ॐ दशकण्ठशिरोध्वंसिने नमः ।
ॐ जाम्बवत्प्रमुखावृताय नमः ।
ॐ जानकीशाय नमः । २६०
ॐ सुराध्यक्षाय नमः ।
ॐ साकेतेशाय नमः ।
ॐ पुरातनाय नमः ।

ॐ पुण्यश्लोकाय नमः ।
ॐ वेदवेद्याय नमः ।
ॐ स्वामितीर्थनिवासकाय नमः ।
ॐ लक्ष्मीसरःकेलिलोलाय नमः ।
ॐ लक्ष्मीशाय नमः ।
ॐ लोकरक्षकाय नमः ।
ॐ देवकीगर्भसंभूताय नमः । २७०
ॐ यशोदेक्षणलालिताय नमः ।
ॐ वसुदेवकृतस्तोत्राय नमः ।

ॐ नन्दगोपमनोहराय नमः ।
ॐ चतुर्भुजाय नमः ।
ॐ कोमलाङ्गाय नमः ।
ॐ गदावते नमः ।
ॐ नीलकुन्तलाय नमः ।
ॐ पूतनाप्राणसंहर्त्रे नमः ।
ॐ तृणावर्तविनाशनाय नमः ।
ॐ गर्गारोपितनामाङ्काय नमः ।
ॐ वासुदेवाय नमः ।

ॐ अधोक्षजाय नमः ।
ॐ गोपिकास्तन्यपायिने नमः ।
ॐ बलभद्रानुजाय नमः ।
ॐ अच्युताय नमः ।
ॐ वैयाघ्रनखभूषाय नमः ।
ॐ वत्सजिते नमः ।
ॐ वत्सवर्धनाय नमः ।
ॐ क्षीररसाराशनरताय नमः ।
ॐ दधिभाण्डप्रमर्दनाय नमः । २९०
ॐ नवनीतापहर्त्रे नमः ।

ॐ नीलनीरदभासुराय नमः ।
ॐ आभीरदृष्टदौर्जन्याय नमः ।
ॐ नीलपद्मनिभाननाय नमः ।
ॐ मातृदर्शितविश्वासाय नमः ।
ॐ उलूखलनिबन्धनाय नमः ।
ॐ नलकूबरशापान्ताय नमः ।
ॐ गोधूलिच्छुरिताङ्गकाय नमः ।
ॐ गोसंघरक्षकाय नमः ।
ॐ श्रीशाय नमः । ३००
ॐ वृन्दारण्यनिवासकाय नमः ।

ॐ वत्सान्तकाय नमः ।
ॐ बकद्वेषिणे नमः ।
ॐ दैत्याम्बुदमहानिलाय नमः ।
ॐ महाजगरचण्डाग्नये नमः ।
ॐ शकटप्राणकण्टकाय नमः ।
ॐ चन्द्रसेव्याय नमः ।
ॐ पुण्यगात्राय नमः ।
ॐ खरजिते नमः ।
ॐ चण्डदीधितये नमः । ३१०

ॐ तालपक्वफलाशिने नमः ।
ॐ कालीयफणिदर्पघ्ने नमः ।
ॐ नागपत्नीस्तुतिप्रीताय नमः ।
ॐ प्रलंबासुरखण्डनाय नमः ।
ॐ दावाग्निबलसंहारिणे नमः ।
ॐ फलाहारिणे नमः ।
ॐ गदाग्रजाय नमः ।
ॐ गोपाङ्गनाचेलचोराय नमः ।
ॐ पाथोलीलाविशारदाय नमः ।

ॐ वंशगानप्रवीणाय नमः । ३२०
ॐ गोपीहस्ताम्बुजार्चिताय नमः ।
ॐ मुनिपत्न्याहृताहाराय नमः ।
ॐ मुनिश्रेष्ठाय नमः ।
ॐ मुनिप्रियाय नमः ।
ॐ गोवर्धनाद्रिसन्धर्त्रे नमः ।
ॐ संक्रन्दनतमोपहाय नमः ।
ॐ सदुद्यानविलासिने नमः ।
ॐ रासक्रीडापरायणाय नमः ।
ॐ वरुणाभ्यर्चिताय नमः ।

ॐ गोपीप्रार्थिताय नमः । ३३०
ॐ पुरुषोत्तमाय नमः ।
ॐ अक्रूरस्तुतिसंप्रीताय नमः ।
ॐ कुब्जायौवनदायकाय नमः ।
ॐ मुष्टिकोरःप्रहारिणे नमः ।
ॐ चाणूरोदरदारणाय नमः ।
ॐ मल्लयुद्धाग्रगण्याय नमः ।
ॐ पितृबन्धनमोचकाय नमः ।
ॐ मत्तमातङ्गपञ्चास्याय नमः ।
ॐ कंसग्रीवानिकृन्तनाय नमः ।

ॐ उग्रसेनप्रतिष्ठात्रे नमः । ३४०
ॐ रत्नसिंहासनस्थिताय नमः ।
ॐ कालनेमिखलद्वेषिणे नमः ।
ॐ मुचुकुन्दवरप्रदाय नमः ।
ॐ साल्वसेवितदुर्धर्ष–
राजस्मयनिवारणाय नमः ।
ॐ रुक्मिगर्वापहारिणे नमः ।
ॐ रुक्मिणीनयनोत्सवाय नमः ।
ॐ प्रद्युम्नजनकाय नमः ।
ॐ कामिने नमः ।
ॐ प्रद्युम्नाय नमः ।
ॐ द्वारकाधिपाय नमः । ३५०
ॐ मण्याहर्त्रे नमः ।
ॐ महामायाय नमः ।
ॐ जाम्बवत्कृतसङ्गराय नमः ।
ॐ जाम्बूनदाम्बरधराय नमः ।
ॐ गम्याय नमः ।
ॐ जाम्बवतीविभवे नमः ।

ॐ कालिन्दीप्रथितारामकेलये नमः ।
ॐ गुञ्जावतंसकाय नमः ।
ॐ मन्दारसुमनोभास्वते नमः ।
ॐ शचीशाभीष्टदायकाय नमः ।
ॐ सत्राजिन्मानसोल्लासिने नमः ।
ॐ सत्याजानये नमः ।
ॐ शुभावहाय नमः ।
ॐ शतधन्वहराय नमः ।
ॐ सिद्धाय नमः ।
ॐ पाण्डवप्रियकोत्सवाय नमः ।
ॐ भद्राप्रियाय नमः ।
ॐ सुभद्रायाः भ्रात्रे नमः ।
ॐ नाग्नजितीविभवे नमः ।
ॐ किरीटकुण्डलधराय नमः ।३७०
ॐ कल्पपल्लवलालिताय नमः ।
ॐ भैष्मीप्रणयभाषावते नमः ।
ॐ मित्रविन्दाधिपाय नमः ।
ॐ अभयाय नमः ।
ॐ स्वमूर्तिकेलिसंप्रीताय नमः ।
ॐ लक्ष्मणोदारमानसाय नमः ।

ॐ प्राग्ज्योतिषाधिपध्वंसिने नमः ।
ॐ तत्सैन्यान्तकराय नमः ।
ॐ अमृताय नमः ।
ॐ भूमिस्तुताय नमः । ३८०
ॐ भूरिभोगाय नमः ।
ॐ भूषणांबरसंयुताय नमः ।
ॐ बहुरामाकृताह्लादाय नमः ।
ॐ गन्धमाल्यानुलेपनाय नमः ।
ॐ नारदादृष्टचरिताय नमः ।
ॐ देवेशाय नमः ।
ॐ विश्वराजे नमः ।
ॐ गुरवे नमः ।
ॐ बाणबाहुविदाराय नमः ।
ॐ तापज्वरविनाशनाय नमः ।३९०
ॐ उपोद्धर्षयित्रे नमः ।
ॐ अव्यक्ताय नमः ।
ॐ शिववाक्तुष्टमानसाय नमः ।
ॐ महेशज्वरसंस्तुत्याय नमः ।

ॐ शीतज्वरभयान्तकाय नमः ।
ॐ नृगराजोद्धारकाय नमः ।
ॐ पौण्ड्रकादिवधोद्यताय नमः ।
ॐ विविधारिच्छलोद्विग्न–
ब्राह्मणेषु दयापराय नमः ।
ॐ केशिदैत्यभयङ्कराय नमः ।४००
ॐ चक्रिणे नमः ।
ॐ चैद्यान्तकाय नमः ।
ॐ सभ्याय नमः ।
ॐ राजबन्धविमोचकाय नमः ।

ॐ राजसूयहविर्भोक्त्रे नमः ।
ॐ स्निग्धाङ्गाय नमः ।
ॐ शुभलक्षणाय नमः ।
ॐ धानाभक्षणसंप्रीताय नमः ।
ॐ कुचेलाभीष्टदायकाय नमः ।
ॐ सत्वादिगुणगम्भीराय नमः ।४१
ॐ द्रौपदीमानरक्षकाय नमः ।
ॐ भीष्मध्येयाय नमः ।
ॐ भक्तवश्याय नमः ।
ॐ भीमपूज्याय नमः ।

ॐ दयानिधये नमः ।
ॐ दन्तवक्त्रशिरश्छेत्त्रे नमः ।
ॐ कृष्णाय नमः ।
ॐ कृष्णासखाय नमः ।
ॐ स्वराजे नमः ।
ॐ वैजयन्तीप्रमोदिने नमः ।४२०
ॐ बर्हिबर्हविभूषणाय नमः ।
ॐ पार्थकौरवसन्धानकारिणे नमः ।
ॐ दुश्शासनान्तकाय नमः ।

ॐ बुद्धाय नमः ।
ॐ विशुद्धाय नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ क्रतुहिंसाविनिन्दकाय नमः ।
ॐ त्रिपुरस्त्रीमानभङ्गाय नमः ।
ॐ सर्वशास्त्रविशारदाय नमः ।
ॐ निर्विकाराय नमः ।४३०
ॐ निर्ममाय नमः ।
ॐ निराभासाय नमः ।

ॐ निरामयाय नमः ।
ॐ जगन्मोहकधर्मिणे नमः ।
ॐ दिग्वस्त्राय नमः ।
ॐ दिक्पतीश्वराय नमः ।
ॐ कल्किने नमः ।
ॐ म्लेच्छप्रहर्त्रे नमः ।
ॐ दुष्टनिग्रहकारकाय नमः ।
ॐ धर्मप्रतिष्ठाकारिणे नमः । ४४०
ॐ चातुर्वर्ण्यविभागकृते नमः ।
ॐ युगान्तकाय नमः ।

ॐ युगाकान्तय नमः ।
ॐ युगकृते नमः ।
ॐ युगभासकाय नमः ।
ॐ कामारये नमः ।
ॐ कामकारिणे नमः ।
ॐनिष्कामाय नमः ।
ॐ कामितार्थदाय नमः ।
ॐ सवितुर्वरेण्याय भर्गसे नमः ।४५०
ॐ शार्ङ्गिणे नमः ।
ॐ वैकुण्ठमन्दिराय नमः ।

ॐ हयग्रीवाय नमः ।
ॐ कैटभारये नमः ।
ॐ ग्राहघ्नाय नमः ।
ॐ गजरक्षकाय नमः ।
ॐ सर्वसंशयविच्छेत्त्रे नमः ।
ॐ सर्वभक्तसमुत्सुकाय नमः ।
ॐ कपर्दिने नमः ।
ॐ कामहारिणे नमः ।४६०
ॐ कलायै नमः ।

ॐ काष्ठायै नमः ।
ॐ स्मृतये नमः ।
ॐ धृतये नमः ।
ॐ अनादये नमः ।
ॐ अप्रमेयौजसे नमः ।
ॐ प्रधानाय नमः ।
ॐ सन्निरूपकाय नमः ।
ॐ निर्लेपाय नमः ।
ॐ निस्स्पृहाय नमः ।४७०

ॐ असङ्गाय नमः ।
ॐ निर्भयाय नमः ।
ॐ नीतिपारगाय नमः ।
ॐ निष्प्रेष्याय नमः ।
ॐ निष्क्रियाय नमः ।
ॐ शान्ताय नमः ।
ॐ निष्प्रपञ्चाय नमः ।
ॐ निधये नमः ।
ॐ नयाय नमः ।
ॐ कर्मिणे नमः ।८८०

ॐ अकर्मिणे नमः ।
ॐ विकर्मिणे नमः ।
ॐ कर्मेप्सवे नमः ।
ॐ कर्मभावनाय नमः ।
ॐ कर्माङ्गाय नमः ।
ॐ कर्मविन्या-
साय नमः ।
ॐ महाकर्मिणे नमः ।
ॐ महाव्रतिने नमः ।
ॐ कर्मभुजे नमः ।

ॐ कर्मफलदाय नमः । ४९०
ॐ कर्मेशाय नमः ।
ॐ कर्मनिग्रहाय नमः ।
ॐ नराय नमः ।
ॐ नारायणाय नमः ।
ॐ दान्ताय नमः ।
ॐ कपिलाय नमः ।
ॐ कामदाय नमः ।
ॐ शुचये नमः ।
ॐ तप्त्रे नमः ।
ॐ जप्त्रे नमः ।५००
ॐ अक्षमालावते नमः ।
ॐ गन्त्रे नमः ।
ॐ नेत्रे नमः ।
ॐ लयाय नमः ।
ॐ गतये नमः ।
ॐ शिष्टाय नमः ।
ॐ द्रष्टे नमः ।

ॐ रिपुद्वेष्ट्रे नमः ।
ॐ रोष्ट्रे नमः ।
ॐ वेष्ट्रे नमः । ५१०
ॐ महानटाय नमः ।
ॐ रोद्ध्रे नमः ।
ॐ बोद्ध्रे नमः ।
ॐ महायोद्ध्रे नमः ।
ॐ श्रद्धावते नमः ।
ॐ सत्यधिये नमः ।
ॐ शुभाय नमः ।

ॐ मन्त्रिणे नमः ।
ॐ मन्त्राय नमः ।
ॐ मन्त्रगम्याय नमः । ५२०
ॐ मन्त्रकृते नमः ।
ॐ परमन्त्रहृते नमः ।
ॐ मन्त्रभृते नमः ।
ॐ मन्त्रफलदाय नमः ।
ॐ मन्त्रेशाय नमः ।
ॐ मन्त्रविग्रहाय नमः ।
ॐ मन्त्राङ्गाय नमः ।

ॐ मन्त्रविन्यासाय नमः ।
ॐ महामन्त्राय नमः ।
ॐ महाक्रमाय नमः ।५३०
ॐ स्थिरधिये नमः ।
ॐ स्थिरविज्ञानाय नमः ।
ॐ स्थिरप्रज्ञाय नमः ।
ॐ स्थिरासनाय नमः ।
ॐ स्थिरयोगााय नमः ।
ॐ स्थिराधाराय नमः ।
ॐ स्थिरमार्गाय नमः ।
ॐ स्थिरागमाय नमः ।
ॐ निश्श्रेयसाय नमः ।
ॐ निरीहाय नमः ।५४०
ॐ अग्नये नमः ।
ॐ निरवद्याय नमः ।
ॐ निरञ्जनाय नमः ।
ॐ निर्वैराय नमः ।
ॐ निरहङ्काराय नमः ।

ॐ निर्दम्भाय नमः ।
ॐ निरसूयकाय नमः ।
ॐ अनन्ताय नमः ।
ॐ अनन्तबाहूरवे नमः ।
ॐ अनन्ताङ्घ्रये नमः । ५५०
ॐ अनन्तदृशे नमः ।
ॐ अनन्तवक्त्राय नमः ।
ॐ अनन्ताङ्गाय नमः ।
ॐ अनन्तरूपाय नमः ।
ॐ अनन्तकृते नमः ।

ॐ ऊर्ध्वरेतसे नमः ।
ॐ ऊर्ध्वलिङ्गाय नमः ।
ॐ ऊर्ध्वमूर्ध्ने नमः ।
ॐ ऊर्ध्वशाखकाय नमः ।
ॐ ऊर्ध्वाय नमः । ५६०
ॐ ऊर्ध्वाध्वरक्षिणे नमः ।
ॐ ऊर्ध्वज्वालाय नमः ।
ॐ निराकुलाय नमः ।
ॐ बीजाय नमः ।
ॐ बीजप्रदाय नमः ।

ॐ नित्याय नमः ।
ॐ निदानाय नमः ।
ॐ निष्कृतये नमः ।
ॐ कृतिने नमः ।
ॐ महते नमः । ५७०
ॐ अणीयसे नमः ।
ॐ गरिम्णे नमः ।
ॐ सुषमाय नमः ।
ॐ चित्रमालिकाय नमः ।

ॐ नभस्स्पृशे नमः ।
ॐ नभसो ज्योतिषे नमः ।
ॐ नभस्वते नमः ।
ॐ निर्नभसे नमः ।
ॐ नभसे नमः ।
ॐ अभवे नमः । ५८०
ॐ विभवे नमः ।
ॐ प्रभवे नमः ।
ॐ शम्भवे नमः ।

ॐ महीयसे नमः ।
ॐ भूर्भुवाकृतये नमः ।
ॐ महानन्दाय नमः ।
ॐ महाशूराय नमः ।
ॐ महोराशये नमः ।
ॐ महोत्सवाय नमः ।
ॐ महाक्रोधाय नमः ।५९०
ॐ महाज्वालाय नमः ।
ॐ महाशान्ताय नमः ।
ॐ महागुणाय नमः ।

ॐ सत्यव्रताय नमः ।
ॐ सत्यपराय नमः ।
ॐ सत्यसन्धाय नमः ।
ॐ सताङ्गतये नमः ।
ॐ सत्येशाय नमः ।
ॐ सत्यसङ्कल्पाय नमः ।
ॐ सत्यचारित्रलक्षणाय नमः ।
ॐ अन्तश्चराय नमः ।
ॐ अन्तरात्मने नमः ।
ॐ परमात्मने नमः ।

ॐ चिदात्मकाय नमः ।
ॐ रोचनाय नमः ।
ॐ रोचमानाय नमः ।
ॐ साक्षिणे नमः ।
ॐ शौरये नमः ।
ॐ जनार्दनाय नमः ।
ॐ मुकुन्दाय नमः ।६१०
ॐ नन्दनिष्पन्दाय नमः ।
ॐ स्वर्णबिन्दवे नमः ।
ॐ पुरन्दराय नमः ।
ॐ अरिन्दमाय नमः ।
ॐ सुमन्दाय नमः ।
ॐ कुन्दमन्दारहासवते नमः ।
ॐ स्यन्दनारूढ-
चण्डाङ्गाय नमः ।
ॐ आनन्दिने नमः ।
ॐ नन्दनन्दनाय नमः ।
ॐ अनसूयानन्दनाय नमः ।६२०

ॐ अत्रिनेत्रानन्दाय नमः ।
ॐ सुनन्दवते नमः ।
ॐ शङ्खवते नमः ।
ॐ पङ्कजकराय नमः ।
ॐ कुङ्कुमाङ्काय नमः ।
ॐ जयांकुशाय नमः ।
ॐ अंभोजमकरन्दाढ्याय नमः ।
ॐ निष्पङ्काय नमः ।
ॐ अगरुपंकिलाय नमः ।
ॐ इन्द्राय नमः ।६३०

ॐ चन्द्ररथाय नमः ।
ॐ चन्द्राय नमः ।
ॐ अतिचन्द्राय नमः ।
ॐ चन्द्रभासकाय नमः ।
ॐ उपेन्द्राय नमः ।
ॐ इन्द्रराजाय नमः ।
ॐ वागिन्द्राय नमः ।
ॐ चन्द्रलोचनाय नमः ।
ॐ प्रतीचे नमः ।
ॐ पराचे नमः ।६४०

ॐ परंधाम्ने नमः ।
ॐ परमार्थाय नमः ।
ॐ परात्पराय नमः ।
ॐ अपारवाचे नमः ।
ॐ पारगामिने नमः ।
ॐ परावाराय नमः ।
ॐ परावराय नमः ।
ॐ सहस्वते नमः ।
ॐ अर्थदात्रे नमः ।
ॐ सहनाय नमः ।६५०
ॐ साहसिने नमः ।
ॐ जयिने नमः ।
ॐ तेजस्विने नमः ।
ॐ वायुविशिखिने नमः ।
ॐ तपस्विने नमः ।
ॐ तापसोत्तमाय नमः ।
ॐ ऐश्वर्योद्भूतिकृते नमः ।
ॐ भूतये नमः ।

ॐ ऐश्वर्याङ्गकलापवते नमः
ॐ अम्भोधिशायिने नमः ६६०
ॐ भगवते नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ सामपारगाय नमः ।
ॐ महायोगिने नमः ।
ॐ महाधीराय नमः ।
ॐ महाभोगिने नमः ।
ॐ महाप्रभवे नमः ।
ॐ महावीराय नमः ।
ॐ महातुष्टये नमः ।
ॐ महापुष्टये नमः ।६७०
ॐ महागुणाय नमः ।
ॐ महादेवाय नमः ।
ॐ महाबाहवे नमः ।
ॐ महाधर्माय नमः ।
ॐ महेश्वराय नमः ।
ॐ समीपगाय नमः ।
ॐ दूरगामिने नमः ।
ॐ स्वर्गमार्गनिरर्गलाय नमः ।

ॐ नगाय नमः ।
ॐ नगधराय नमः ।६८०
ॐ नागाय नमः ।
ॐ नागेशाय नमः ।
ॐ नागपालकाय नमः ।
ॐ हिरण्मयाय नमः ।
ॐ स्वर्णरेतसे नमः ।
ॐ हिरण्यार्चिषे नमः ।
ॐ हिरण्यदाय नमः ।

ॐ गुणगण्याय नमः ।
ॐ शरण्याय नमः ।
ॐ पुण्यकीर्तये नमः ।६९०
ॐ पुराणगाय नमः ।
ॐ जन्यभृते नमः ।
ॐ जन्यसन्नद्धाय नमः ।
ॐ दिव्यपञ्चायुधाय नमः ।
ॐ वशिने नमः ।
ॐ मौर्ज्य[illegible]ाय नमः ।

ॐ पर्जन्याय नमः ।
ॐ सौजन्यनिलयाय नमः ।
ॐ अलयाय नमः ।
ॐ जलन्धरान्तकाय नमः ।७००
ॐ भस्मदैत्यनाशिने नमः ।
ॐ महामनसे नमः ।
ॐ श्रेष्ठाय नमः ।
ॐ श्रविष्ठाय नमः ।
ॐ द्राघिष्ठाय नमः ।
ॐ गरिष्ठाय नमः ।

ॐ गरुडध्वजाय नमः ।
ॐ ज्येष्ठाय नमः ।
ॐ द्रढिष्ठाय नमः ।
ॐ वर्षिष्ठाय नमः ।७१०
ॐ द्राघीयसे नमः ।
ॐ प्रणवाय नमः ।
ॐ फणिने नमः ।
ॐ संप्रदायकराय नमः ।
ॐ स्वामिने नमः ।
ॐ सुरेशाय नमः ।

ॐ माधवाय नमः ।
ॐ मधवे नमः ।
ॐ निर्णिमेषाय नमः ।
ॐ विधये नमः । ७२०
ॐ वेधसे नमः ।
ॐ बलवते नमः ।
ॐ जीवनाय नमः ।
ॐ बलिने नमः ।
ॐ स्मर्त्रे नमः ।
ॐ श्रोत्रे नमः ।
ॐ विकर्त्रे नमः ।
ॐ ध्यात्रे नमः ।
ॐ नेत्रे नमः ।
ॐ समाय नमः । ७३०
ॐ असमाय नमः ।
ॐ होत्रे नमः ।
ॐ पोत्रे नमः ।
ॐ महावक्त्रे नमः ।

ॐ रन्त्रे नमः ।
ॐ मन्त्रे नमः ।
ॐ खलान्तकाय नमः ।
ॐ दात्रे नमः ।
ॐ ग्राहयित्रे नमः ।
ॐ मात्रे नमः ।७४०
ॐ नियन्त्रे नमः ।
ॐ अनन्तवैभवाय नमः ।
ॐ गोप्त्रे नमः ।
ॐ गोपयित्रे नमः ।

ॐ हन्त्रे नमः ।
ॐ धर्मजागरित्रे नमः ।
ॐ धवाय नमः ।
ॐ कर्त्रे नमः ।
ॐ क्षेत्रकराय नमः ।
ॐ क्षेत्रप्रदाय नमः ।७५०
ॐ क्षेत्रज्ञाय नमः ।
ॐ आत्मविदे नमः ।
ॐ क्षेत्रिणे नमः ।
ॐ क्षेत्रहराय नमः ।

ॐ क्षेत्रप्रियाय नमः ।
ॐ क्षेमकराय नमः ।
ॐ मरुते नमः ।
ॐभक्तिप्रदाय नमः ।
ॐ मुक्तिदायिने नमः ।
ॐ शक्तिदाय नमः । ७६०
ॐ युक्तिदायकाय नमः ।
ॐ शक्तियुजे नमः ।
ॐ मौक्तिकस्रग्विणे नमः ।

ॐ सूक्तये नमः ।
ॐ आम्नायसूक्तिगाय नमः ।
ॐ धनञ्जयाय नमः ।
ॐ धनाध्यक्षाय नमः ।
ॐ धनिकाय नमः ।
ॐ धनदाधिपाय नमः ।
ॐ महाधनाय नमः ।७७०
ॐ महामानिने नमः ।
ॐ दुर्योधनविमानिताय नमः ।

ॐ रत्नाकराय नमः ।
ॐ रत्नरोचिषे नमः ।
ॐ रत्नगर्भाश्रयाय नमः ।
ॐ शुचये नमः ।
ॐ रत्नसानुनिधये नमः ।
ॐ मौलिरत्नभासे नमः ।
ॐ रत्नकङ्कणाय नमः ।
ॐअन्तर्लक्ष्याय नमः ।७८०
ॐ अन्तरभ्यासिने नमः ।
ॐ अन्तर्ध्येयाय नमः ।

ॐ जितासनाय नमः ।
ॐ अन्तरङ्गाय नमः ।
ॐ दयावते नमः ।
ॐ अन्तर्मायाय नमः ।
ॐ महार्णवाय नमः ।
ॐ सरसाय नमः ।
ॐ सिद्धरसिकाय नमः ।
ॐ सिद्धये नमः ।७९०
ॐ सिद्धयाय नमः ।
ॐसदागतये नमः ।

ॐ आयुःप्रदाय नमः ।
ॐ महायुष्मते नमः ।
ॐ अर्चिष्मते नमः ।
ॐ ओषधीपतये नमः ।
ॐ अष्टश्रियै नमः ।
ॐ अष्टभागाय नमः ।
ॐ अष्टककुब्व्याप्तयशसे नमः ।
ॐ व्रतिने नमः ।८००
ॐ अष्टापदाय नमः ।
ॐ सुवर्णाभाय नमः ।
ॐ अष्टमूर्तये नमः ।
ॐ त्रिमूर्तिमत्ते नमः ।
ॐ अस्वप्नाय नमः ।
ॐ स्वप्नगाय नमः ।
ॐ स्वप्नाय नमः ।
ॐ सुस्वप्नफलदायकाय नमः ।
ॐ दुस्स्वप्नध्वंसकाय नमः ।
ॐ ध्वस्तदुर्निमित्ताय नमः ।८१०

ॐ शिवङ्कराय नमः ।
ॐ सुवर्णवर्णाय नमः ।
ॐ संभाव्याय नमः ।
ॐ वर्णिताय नमः ।
ॐ वर्णसम्मुखाय नमः ।
ॐ सुवर्णमुखरीतीरशिव–
ध्यातपदाम्बुजाय नमः ।
ॐ दाक्षायणीवचस्तुष्टाय नमः ।
ॐ दुर्वासोदृष्टिगोचराय नमः ।
ॐ अंबरीषव्रतप्रीताय नमः ।

ॐ महाकृत्तिविभञ्जनाय नमः । ८२०
ॐ महाभिचारकध्वंसिने नमः ।
ॐ कालसर्पभयान्तकाय नमः ।
ॐसुदर्शनाय नमः ।
ॐ कालमेघश्यामाय नमः ।
ॐ श्रीमन्त्रभाविताय नमः ।
ॐ हेमाम्बुजसरस्नायिने नमः ।
ॐ श्रीमनोभाविताकृतये नमः ।
ॐ श्रीप्रदत्ताम्बुजस्रग्विणे नमः ।
ॐ श्रीकेलये नमः ।

ॐ श्रीनिधये नमः ।८३०
ॐ भवाय नमः ।
ॐ श्रीप्रदाय नमः ।
ॐ वामनाय नमः ।
ॐ लक्ष्मीनायकाय नमः ।
ॐ चतुर्भुजाय नमः ।
ॐ सन्तृप्ताय नमः ।
ॐ तर्पिताय नमः ।
ॐ तीर्थस्नातृसौख्यप्रदर्शकाय नमः ।

ॐ अगस्त्यस्तुतिसंहृष्टाय नमः ।
ॐ दर्शिताव्यक्तभावनाय नमः ।
ॐ कपिलार्चिषे नमः ।
ॐ कपिलवते नमः ।
ॐ सुस्नाताघाविपाटनाय नमः ।
ॐ वृषाकपये नमः ।
ॐ कपिस्वामिमनोन्तस्स्थित–
विग्रहाय नमः ।
ॐ वह्निप्रियाय नमः ।

ॐ अर्थसम्भाव्याय नमः ।
ॐ जनलोकविधायकाय नमः ।
ॐ वह्निप्रभाय नमः ।
ॐ वह्नितेजसे नमः ।८५०
ॐ शुभाभीष्टप्रदाय नमः ।
ॐ यमिने नमः ।
ॐ वारुणक्षेत्रनिलयाय नमः ।
ॐ वरुणाय नमः ।
ॐ सारणार्चिताय नमः ।
ॐ वायुस्थानकृतावासाय नमः ।

ॐ वायुगाय नमः ।
ॐ वायुसंभृताय नमः ।
ॐ यमान्तकाय नमः ।
ॐ अभिजननाय नमः ।८६०
ॐ यमलोकनिवारणाय नमः ।
ॐ यमिनामग्रगण्याय नमः ।
ॐ संयमिने नमः ।
ॐ यमभाविताय नमः ।
ॐ इन्द्रोद्यानसमीपस्थाय नमः ।
ॐ इन्द्रदृग्विषयाय नमः ।

ॐ प्रभवे नमः ।
ॐ यक्षराट्सरसीवासाय नमः ।
ॐ अक्षय्यनिधिकोशकृते नमः ।
ॐ स्वामितीर्थकृतावासाय नमः ।
ॐ स्वामिध्येयाय नमः ।
ॐ अधोक्षजाय नमः ।
ॐ वराहाद्यष्टतीर्थाभि–
सेवितांघ्रिसरोरुहाय नमः ।
ॐ पाण्डुतीर्थाभिषिक्ताङ्गाय नमः ।
ॐ युधिष्ठिरवरप्रदाय नमः ।
ॐ भीमान्तःकरणारूढाय नमः ।
ॐ श्वेतवाहनसख्यवते नमः ।
ॐ नकुलाभयदाय नमः ।
ॐ माद्रीसहदेवाभिवन्दिताय नमः ।
ॐ कृष्णाशपथसन्धात्रे नमः ।८८०
ॐ कुन्तीस्तुतिरताय नमः ।
ॐ दमिने नमः ।
ॐ नारदादिमुनिस्तुत्याय नमः ।

ॐ नित्यकर्मपरायणाय नमः ।
ॐ दर्शिताव्यक्तरूपाय नमः ।
ॐ वीणानादप्रमोदिताय नमः ।
ॐ षट्कोटितीर्थचर्यावते नमः ।
ॐ देवतीर्थकृताश्रमाय नमः ।
ॐ निल्वामलजल-
स्नयिने नमः ।
ॐ सरस्वत्यम्बुसेविताय नमः ।
ॐ तुम्बुरूदकसंस्पर्शज-
चित्ततमोपहाय नमः ।

ॐ मत्स्यवामनकूर्मादि-
तीर्थराजाय नमः ।
ॐ पुराणभृते नमः ।
ॐ शक्रध्येयपदाम्भोजाय नमः ।
ॐ शङ्खपूतिजपादुकाय नमः ।
ॐ रामतीर्थविहारिणे नमः ।
ॐ बलभद्रप्रति-
ष्ठिताय नमः ।
ॐ जामदग्न्यसरस्तीर्थजल-
सेचनतर्पिताय नमः ।

ॐ पापापहारिकीलाल–
सुस्नाताघविनाशनाय नमः ।
ॐ नभोगङ्गाभिषिक्ताय नमः ।९००
ॐ नागतीर्थाभिषेकवते नमः ।
ॐ कुमारधारातीर्थस्थाय नमः ।
ॐ बटुवेषाय नमः ।
ॐ सुमेखलाय नमः ।
ॐ वृद्धस्य सुकुमारत्वप्रदाय नमः ।
ॐ सौन्दर्यवते नमः ।

ॐ सुखिने नमः ।
ॐ प्रियंवदाय नमः ।
ॐ महाकुक्षये नमः ।
ॐ इक्ष्वाकुकुलनन्दनाय नमः ।९१०
ॐ नीलगोक्षीरधाराभुवे नमः ।
ॐ वराहाचलनायकाय नमः ।
ॐ भरद्वाजप्रतिष्ठावते नमः ।
ॐ बृहस्पतिविभाविताय नमः ।
ॐ अञ्जनाकृतपूजावते नमः ।

ॐ आञ्जनेयकरार्चिताय नमः ।
ॐ अञ्जनाद्रिनिवासाय नमः ।
ॐ मुञ्जिकेशाय नमः ।
ॐ पुरन्दराय नमः
ॐ किन्नरद्वन्द्वसंबन्धिबन्ध-
मोक्षप्रदायकाय नमः ।९२०
ॐ वैखानसमखारंभाय नमः ।
ॐ वृषज्ञेयाय नमः ।
ॐ वृषाचलाय नमः ।
ॐ वृषकायप्रभेत्रे नमः ।

ॐ क्रीडनाचारसंभ्रमाय नमः ।
ॐ सौवर्चलेयविन्यस्त-
राज्याय नमः ।
ॐ नारायणप्रियाय नमः ।
ॐ दुर्मेधोभञ्जकाय नमः ।
ॐ प्राज्ञाय नमः ।
ॐ ब्रह्मोत्सवमहोत्सुकाय नमः ।९३०
ॐ भद्रासुरशिरश्छेत्रे नमः ।
ॐ भद्रक्षेत्रिणे नमः ।
ॐ सुभद्रवते नमः ।

ॐ मृगयाक्षीणसन्नाहाय नमः ।
ॐ शङ्खराजन्यतुष्टिदाय नमः ।
ॐ स्थाणुस्थाय नमः ।
ॐ वैनतेयाङ्गभाविताय नमः ।
ॐ अशरीरवते नमः ।
ॐ भोगीन्द्रभोगसंस्थानाय नमः ।
ॐ ब्रह्मादिगणसेविताय नमः ।९४०
ॐ सहस्रार्कच्छटाभास्व–
द्विमानान्तस्स्थिताय नमः ।
ॐ गुणिने नमः ।
ॐ विष्वक्सेनकृतस्तोत्राय नमः
ॐ सनन्दनपरीवृताय नमः ।
ॐ जाह्नव्यादिनदीसेव्याय नमः ।
ॐ सुरेशाद्यभिवन्दिताय नमः ।
ॐ सुराङ्गनानृत्यपराय नमः ।
ॐ गन्धर्वोद्गायनप्रियाय नमः ।
ॐ राकेन्दुसंकाशनखाय नमः ।
ॐ कोमलांघ्रिसरोरुहाय नमः ।९५०

ॐ कच्छपप्रपदाय नमः ।
ॐ कुन्दगुल्फकाय नमः ।
ॐ स्वच्छकूर्पराय नमः ।
ॐ मेदुरस्वर्णवस्त्राढ्यकटि-
देशस्थमेखलाय नमः ।
ॐ प्रोल्लसच्छुरिकाभास्व-
त्कटिदेशाय नमः ।
ॐ शुभङ्कराय नमः ।
ॐ अनन्तपद्मजस्थाननाभये नमः ।
ॐ मौक्तिकमालिकाय नमः ।

ॐ मन्दारचाम्पेयमालिने नमः ।
ॐ रत्नाभरणसंभृताय नमः ।९६०
ॐ लम्बयज्ञोपवीतिने नमः ।
ॐ चन्द्रश्रीखण्डलेपवते नमः ।
ॐ वरदाय नमः ।
ॐ अभयदाय नमः ।
ॐ चक्रिणे नमः ।
ॐ शङ्खिने नमः ।
ॐ कौस्तुभदीप्तिमते नमः ।
ॐ श्री वत्साङ्कितवक्षस्काय नमः ।

ॐ लक्ष्मीसंश्रितहृत्तटाय नमः ।
ॐ नीलोत्पलनिभाकाराय नमः ।
ॐशोणाम्भोजसमाननाय नमः ।
ॐ कोटिमन्मथलावण्याय नमः ।
ॐ चन्द्रिकास्मितपूरिताय नमः ।
ॐ सुधास्वच्छोर्ध्वपुण्ड्राय नमः ।
ॐ कस्तूरीतिलकाञ्चिताय नमः ।
ॐ पुण्डरीकेक्षणाय नमः ।
ॐ स्वच्छाय नमः ।

ॐ मौलिशोभाविराजिताय नमः ।
ॐ पद्मस्थाय नमः ।
ॐ पद्मनाभाय नमः ।९८०
ॐ सोममण्डलगाय नमः ।
ॐ बुधाय नमः ।
ॐ वह्निमण्डलगाय नमः ।
ॐ सूर्याय नमः ।
ॐ सूर्यमण्डलसंस्थिताय नमः ।
ॐ श्रीपतये नमः ।

ॐ भूमिजानये नमः ।
ॐ विमलाद्यभिसंवृताय नमः ।
ॐ जगत्कुटुम्बजनित्रे नमः ।
ॐ रक्षकाय नमः । ९९०
ॐ कामितप्रदाय नमः ।
ॐ अवस्थात्रययन्त्रे नमः ।
ॐ विश्वतेजस्स्वरूपवते नमः ।

ॐ ज्ञप्तये नमः ।
ॐ ज्ञेयाय नमः ।
ॐ ज्ञानगम्याय नमः ।
ॐ ज्ञानातीताय नमः ।
ॐ सुरातिगाय नमः ।
ॐ ब्रह्माण्डान्तर्बहिर्व्याप्ताय नमः ।
ॐ वेङ्कटाद्रिगदाधराय नमः ।

श्रीवेङ्कटेशसहस्रनामावलिः समाप्ता ॥

## ॥ श्रीवेङ्कटेशाष्टोत्तरशतनामस्तोत्रम् ॥

श्रीवेङ्कटेशश्श्रीवासो लक्ष्मीपतिरनामयः ।
अमृतांशो जगद्वन्द्यो गोविन्दश्शाश्वतः प्रभुः ॥ १ ॥
शेषाद्रिनिलयो देवः केशवो मधुसूदनः ।
अमृतो माधवः कृष्णः श्रीहरिर्ज्ञानपञ्जरः ॥ २ ॥
श्रीवत्सवक्षास्सर्वेशो गोपालः पुरुषोत्तमः ।
गोपीश्वरः परंज्योतिर्वैकुण्ठपतिरव्ययः ॥ ३ ॥
सुधातनुर्यादवेन्द्रो नित्ययौवनरूपवान् ।
चतुर्वेदात्मको विष्णुरच्युतः पद्मिनीप्रियः ॥ ४ ॥

धरापतिस्सुरपतिर्निर्मलो देवपूजितः ।
चतुर्भुजश्चक्रधरस्त्रिधामा त्रिगुणाश्रयः ॥ ५ ॥
निर्विकल्पो निष्कलङ्को निरातङ्को निरञ्जनः ।
निराभासो नित्यतृप्तो निर्गुणो निरुपद्रवः ॥ ६ ॥
गदाधरश्शार्ङ्गपाणिर्नन्दकीशङ्खधारकः ।
अनेकमूर्तिरव्यक्तः कटिहस्तो वरप्रदः ॥ ७ ॥
अनेकात्मा दीनबन्धुरार्तलोकाभयप्रदः ।
आकाशराजवरदो योगिहृत्पद्ममन्दिरः ॥ ८ ॥
दामोदरो जगत्पालः पापघ्नो भक्तवत्सलः ।

त्रिविक्रमश्शिशुमारो जटामुकुटशोभितः ॥ ९ ॥
शङ्खमध्योल्लसन्मञ्जु किङ्किण्याढ्यकरण्डकः ।
नीलमेघश्यामतनुर्बिल्वपत्रार्चनप्रियः ॥१० ॥
जगद्व्यापी जगत्कर्ता जगत्साक्षी जगत्पतिः ।
चिन्तितार्थप्रदो जिष्णुर्दाशार्हो दशरूपवान् ॥ ११ ॥
देवकीनन्दनश्शौरिर्हयग्रीवो जनार्दनः ।
कन्याश्रवणतारेज्यः पीताम्बरधरोऽनघः ॥ १२ ॥
वनमाली पद्मनाभो मृगयासक्तमानसः ।

अश्वारुढः खड्गधारी धनार्जनसमुत्सुकः ॥ १३ ॥
घनसारलसन्मध्यकस्तूरीतिलकोज्ज्वलः ।
सच्चिदानन्दरूपश्च जगन्मङ्गलदायकः ॥ १४ ॥
यज्ञरूपो यज्ञभोक्ता चिन्मयः परमेश्वरः ।
परमार्थप्रदश्शान्तः श्रीमान् दोर्दण्डविक्रमः ॥ १५ ॥
परात्परः परब्रह्म श्रीविभुर्जगदीश्वरः ।
एवं श्रीवेङ्कटेशस्य नाम्नामष्टोत्तरं शतम् ॥ १६ ॥
पठतां शृण्वतां भक्त्या सर्वाभि:ष्टप्रदं शुभम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वान् कामानवाप्नुयात् ॥ १७ ॥

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥

॥ श्रीवेङ्कटेश्वराष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

# श्रीवेङ्कटेशाष्टोत्तरशतनामावलिः ॥

ॐ श्रीवेङ्कटेशाय नमः ।
ॐ श्रीवासाय नमः ।
ॐ लक्ष्मीपतये नमः ।
ॐ अनामयाय नमः ।
ॐ अमृतांशाय नमः ।
ॐ जगद्वन्द्याय नमः ।
ॐ गोविन्दाय नमः ।
ॐ शाश्वताय नमः ।
ॐ प्रभवे नमः ।
ॐ शेषाद्रिनिलयाय नमः ।१०
ॐ केशवाय नमः ।
ॐ देवाय नमः ।
ॐ मधुसूदनाय नमः ।
ॐ अमृताय नमः ।
ॐ माधवाय नमः ।
ॐ श्री कृष्णाय नमः ।
ॐ श्रीहरये नमः ।
ॐ ज्ञानपञ्जराय नमः ।

ॐ श्रीवत्सवक्षसे नमः ।
ॐ सर्वेशाय नमः । २०
ॐ गोपालाय नमः ।
ॐ पुरुषोत्तमाय नमः ।
ॐ गोपीश्वराय नमः ।
ॐ परंज्योतिषे नमः ।
ॐ वैकुण्ठपतये नमः ।
ॐ अव्ययाय नमः ।
ॐ सुधातनवे नमः ।
ॐ यादवेन्द्राय नमः ।
ॐ नित्ययौवनरूपवते नमः ।
ॐ चतुर्वेदात्मकाय नमः ।३०
ॐ विष्णवे नमः ।
ॐ अच्युताय नमः ।
ॐ पद्मिनीप्रियाय नमः ।
ॐ धरापतये नमः ।
ॐ सुरपतये नमः ।
ॐ निर्मलाय नमः ।

ॐ देवपूजिताय नमः ।
ॐ चतुर्भुजाय नमः ।
ॐ चक्रधराय नमः ।
ॐ त्रिधाम्ने नमः । ४०
ॐ त्रिगुणाश्रयाय नमः ।
ॐ निर्विकल्पाय नमः ।
ॐ निष्कलङ्काय नमः ।
ॐ निरातङ्काय नमः ।
ॐ निरञ्जनाय नमः ।
ॐ निराभासाय नमः ।
ॐ नित्यतृप्ताय नमः ।
ॐ निरुपद्रवाय नमः ।
ॐ निर्गुणाय नमः ।
ॐ गदाधराय नमः ।५०
ॐ शार्ङ्गपाणये नमः ।
ॐ नन्दकिने नमः ।
ॐ शङ्खधारकाय नमः ।
ॐ अनेकमूर्तये नमः ।
ॐ अव्यक्ताय नमः ।
ॐ कटिहस्ताय नमः ।

ॐ वरप्रदाय नमः ।
ॐ अनेकात्मने नमः ।
ॐ दीनबन्धवे नमः ।
ॐ आर्तलोकाभयप्रदाय नमः ।६०
ॐ आकाशराजवरदाय नमः ।
ॐ योगिहृत्पद्ममन्दिराय नमः ।
ॐ दामोदराय नमः ।
ॐ जगत्पालाय नमः ।
ॐ पापघ्नाय नमः ।

ॐ भक्तवत्सलाय नमः ।
ॐ त्रिविक्रमाय नमः ।
ॐ शिंशुमाराय नमः ।
ॐ जटामुकुटशोभिताय नमः ।
ॐ शङ्खमध्योल्लसन्मञ्जु-
किङ्किण्याढ्यकरण्डकाय नमः ।
ॐ नीलमेघश्यामतनवे नमः ।
ॐ बिल्वपत्रार्चनप्रियाय नमः ।
ॐ जगद्व्यापिने नमः ।

ॐ जगत्साक्षिणे नमः ।
ॐ जगत्पतये नमः ।
ॐ चिन्तितार्थप्रदायकाय नमः ।
ॐ जिष्णवे नमः ।
ॐ दाशार्हाय नमः ।
ॐ दशरूपवते नमः ।
ॐ देवकीनन्दनाय नमः ।
ॐ शौरये नमः ।
ॐ हयग्रीवाय नमः ।
ॐ जनार्दनाय नमः ।

ॐ कन्याश्रवणता-
रेज्याय नमः ।
ॐ पीताम्बरधराय नमः ।
ॐ अनघाय नमः ।
ॐ वनमालिने नमः ।
ॐ पद्मनाभाय नमः ।
ॐ मृगयासक्तमानसाय नमः ।९०
ॐ अश्वारूढाय नमः ।
ॐ खड्गधारिणे नमः ।
ॐ धनार्जनसमुत्सुकाय नमः ।

ॐ घनसारलसन्मध्य कस्तूरी–
तिलकोज्ज्वलाय नमः ।
ॐ सच्चिदानन्दरूपाय नमः ।
ॐ जगन्मङ्गलदायकाय नमः ।
ॐ यज्ञरूपाय नमः ।
ॐ यज्ञभोक्त्रे नमः ।
ॐ चिन्मयाय नमः ।
ॐ परमेश्वराय नमः ।१००

ॐ परमार्थप्रदायकाय नमः ।
ॐ शान्ताय नमः ।
ॐ श्रीमते नमः ।
ॐ दोर्दण्डविक्रमाय नमः ।
ॐ परात्पराय नमः ।
ॐ परब्रह्मणे नमः ।
ॐ श्रीविभवे नमः ।
ॐ जगदीश्वराय नमः । १०८

॥ इति श्रीवेङ्कटेशाष्टोत्तरशतनामावलिः समाप्ता ॥

२०. सौन्दर्यलहरी-आनन्दलहरी च ।
२१. वेङ्कटेशसहस्रनामस्तोत्रम् ।नामावलीसहितम्
२२. सुब्रह्मण्यसहस्रनामस्तोत्रम् ।नामावलीसहितम्
२३. शिवमहिम्नस्तोत्रम् ।नामावलीसहितम्
२४. महागणपतिसहस्रनामस्तोत्रम् । नामावलीसहितम्
२५. अन्नपूर्णास्तोत्रम् । कवच-अष्टोत्तरशतनामावलि सहितम्
२६. एकादशीमाहात्म्यम् ।हिन्दी टीका सहित ।
२७. हिन्दी शिवमहिम्नस्तोत्रम् ।हिन्दीपद्यानुवाद सहित ।
२८. सत्यनारायणकथा ।पूजाविधि-भाषाटीका-सहित ।

२९. ऋषिपञ्चमी-व्रत-कथा । भाषा टीका । पूजा-उद्यापनविधिसहित

वेङ्कटेशसहस्रनामस्तोत्रम् ।नामावलीसहितम्

सुब्रह्मण्यसहस्रनामस्तोत्रम् ।नामावलीसहितम्

शिवमहिम्नस्तोत्रम् ।नामावलीसहितम्

महागणपतिसहस्रनामस्तोत्रम् । नामावलीसहितम्

अन्नपूर्णास्तोत्रम् । कवच-अष्टोत्तरशतनामावलि सहितम्

एकादशीमाहात्म्यम् ।हिन्दी टीका सहित ।

हिन्दी शिवमहिम्नस्तोत्रम् ।हिन्दीपद्यानुवाद सहित ।

सत्यनारायणकथा ।पूजाविधि-भाषाटीका-सहित ।

ऋषिपञ्चमी-व्रत-कथा । भाषा टीका । पूजा-उद्यापनविधिसहित ।

आदित्यहृदयस्तोत्रम् । हिन्दी टीका सहित ।

लक्ष्मीसहस्रनामस्तोत्रम् । नामावलीसहितम्